# काश्मीर-संस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ८-९

# श्रीविज्ञानभैरवः

२ टीके

THE RESEARCH DEPARTMENT JAMMU & KASHMIR STATE

काश्मीर-श्रीनगर



Price, Paper Cover Rs. 2-8. मू० २-८.

KASHMIR SERIES OF TEXTS AND STUDIES.

No. VIII.

# THE VIJÑĀNA-BHAIRAVA

WITH COMMENTARY PARTLY BY

**KSHEMARĀJA**

AND PARTLY BY

**SHIVOPĀDHYĀYA.**

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
**SIR PRATĀP SINGH SĀHIB BAHĀDUR,**
G. C. S. I., G. C. I. E.,
**MAHĀRĀJA** OF JAMMU AND KASHMIR STATE.

BOMBAY :
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.

---

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८

# श्रीविज्ञानभैरवः

श्रीमन्महामाहेश्वराचार्य-श्रीक्षेमराजाचार्यकृतविवृतिभागोत्तरं
श्रीपण्डितशिवोपाध्यायकृतोद्द्योताख्यविवृत्युपेतः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-
श्रीप्रतापसिंहवर-प्रतिष्ठापिते
**प्रत्नविद्याप्रकाश-( रिसर्च ) कार्यालये**
**तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा**
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
**मुम्बय्यां**
तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः

संवत् १९७५ खैस्ताब्दः १९१८

**काश्मीर-श्रीनगर**

ओंनमश्चिद्भैरववपुषे स्वात्मशंभवे ॥

अथ

# विज्ञानभैरवः

श्रीक्षेमराजाचार्यविरचितविवृतिभागोत्तरं श्रीशिवोपाध्यायविरचितविवृत्युपेतः ।

भीरूणामभयप्रदो भवभयाक्रन्दस्य हेतुस्ततो
हृद्याम्नि प्रथितश्च भीरवरुचामीशोऽन्तकस्यान्तकः ।
भीरं वायति यः स्वयोगिनिवहस्तस्य प्रभुर्भैरवो
विश्वस्मिन्भरणादिकृद्विजयते विज्ञानरूपः परः ॥१॥

स्वैरिस्वच्छस्फुरद्भाभिर्भासिताण्वाद्युपायतः ।
स्वोन्मेषाच्छाम्भवावेशं दर्शयन्तीं शिवां श्रये ॥ २ ॥

आम्नायाद्यमृतैः सिञ्चन्त्यन्तेवासिमनोऽवनीः ।
जयत्यतुलतापच्छिद्गुरुगीरम्बुदावली ॥ ३ ॥

धीमन्दराचलवलत्परमागमाब्धे-
रुल्लास्यते किमपि यत्परमामृतं तत् ।
जीवच्छिवत्वमधिगन्तुममुत्र सद्भिः
संचर्व्यतामविरतं परशक्तिपूतैः ॥ ४ ॥

इह श्रीमान् चिद्भैरवः पूर्णाहंविमर्शात्मपरशाक्तस्फुरत्ताभित्ता-
वन्तःकृतानन्तावान्तरसर्गादिप्रपञ्चपूर्वपूर्वदशानिमेषणवशोन्मिषदु-

पं० ५ क० पु० भासितार्धाद्युपायेति पाठः ।

त्तरोत्तरावस्थेच्छाज्ञानक्रियाशक्तिसारानाश्रितसदाशिवेश्वरपदाव-भासनस्वरूपो बीजभूतैतद्दशागोपनासतत्त्वग्राहकतच्छक्तितत्पश्य-न्त्यादिभूम्याभासपुरःसरमेयाभासान्तस्फुरणया जगद्व्यवस्थामिव निमिषद्वैखर्यादिवशोन्मिषदीश्वरादिस्फुरणया अनुग्रहनिमज्जितमि-तमातृतच्छक्त्युन्मज्जितरुद्रयामलसमावेशमुन्मीलयति – इत्यद्वयनयेषु पञ्चकृत्यकारितोच्यते भगवतः । तत्र पश्यन्त्यादिपदे द्योतना-दिसतत्त्वा संविद्देवी प्रबुध्यमानतया प्रष्ट्री स्वा परभैरवाभिन्ना पराभूमिं सदा स्वाभासामप्यन्तर्बाह्याक्षागोचरत्वात् परोक्षामिव, पश्यन्त्यादिकालापेक्षया तु भूतामिव, तत्तद्रुद्रक्षेत्रज्ञतत्तत्प्राणांशां-शिकापेक्ष्यकल्पावधिकदिनमासान्वयाभावात् अद्यतनीमिव यावदा-वेष्टुमामृशति तावत् 'सुप्तोऽहं किल विललाप' इतिवत् अहमेव संविद्देवी पश्यन्त्यादिपदे प्रबुभुत्सुरस्फुटस्फुरितपराभट्टारिकैक्य-चकासद्रहस्यमुवाचाममर्श। एवं प्रबुद्धा सती नैराकाङ्क्ष्यात् 'भिया सर्वं रवयति' इति निरुक्तभैरवरूपा अहमेवोवाचेति,

## श्री देव्युवाच ।

'श्रुतं देव'.........इत्यादेः ।

## भैरव उवाच ।

'साधु साधु' इत्यादिकमभ्यस्य 'सर्वत्रिशक्तिभेदानां हृदयं ज्ञातमद्य च' इत्यन्तस्य शास्त्रस्य परसंबन्धप्राणतैव । तादित्थं पर-

---

पं० २ क० ग० पु० 'गोपनातत्त्व' इति पाठः ।

पं० ३ क० पु० पुरःसरमेवाभासान्तर इति पाठः ।

पं० ८ ग० पु० सदास्वाभाम् इति पाठः ।

पं० १० क० पु० अनद्यतनीम् इति पाठः ।

पं० १३ क० पु० चकास्यरहस्यम् इति पाठः ।

संबन्धसतत्त्वं श्रीविज्ञानभैरवाभिधायि 'इत्युक्त्वानन्दिता देवी कण्ठे लग्ना शिवस्य तु' इत्यन्तेऽभिधास्यमानत्वात् विज्ञानभैरवावेशप्रयोजनत्वात् तदभिधानमेवेदं शास्त्रम्, तन्त्रावतारकहृद्भूमिमश्नुवाना पराभट्टारिका उचितवचनरचनाक्रमेण वस्तुपूर्वकमुपक्षिपति।

---

श्रुतं देव मया सर्वं
रुद्रयामलसंभवम् ।
त्रिकभेदमशेषेण
सारात्सारविभागशः ॥ १ ॥
अद्यापि न निवृत्तो मे
संशयः परमेश्वर ।

---

हे देव विश्वावद्योतनक्रीडनादिसतत्त्व स्वात्मन्, समस्तरुद्राविरुद्रतच्छक्तिसामरस्यात्मनो यामलात्

'अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ॥'

इत्याम्नायोक्तेः संभवो यस्य तत्, अर्थात् शास्त्रं सर्वं त्रिकस्य परादिशक्तित्रयसारनर-शक्ति-शिवात्मनस्तत्त्वत्रयस्य भेदो ज्ञानक्रियाप्राधान्येतरादिप्रतिपादनेन भिद्यमानता यत्र, तदपि अशेषेण—सामस्त्येन श्रुतम् । कथं 'सारात्सारविभागशः'

---

पं० ११ क० पु८ क्रीडादि इति पाठः ।
पं० १५ क० पु० अर्थात् इति पदं नास्ति ।

'वेदादिभ्यः परं शैवं शैवाद्वामं तु दक्षिणम् ।
दक्षिणात्परतः कौलं कौलात्परतरं त्रिकम् ॥'

इतिस्थित्या तावत् त्रिकशास्त्रं सारम् । तत्रापि सिद्धा-मालिन्युत्तरादि क्रमात्क्रमं ज्ञानप्रकर्षोपदेशोत्कर्षात् उत्कृष्टम्, अद्यापि च न मे संशयः शान्त इति ॥ १½ ॥

तमेव च संशयमधिगतचरानेकशास्त्रार्थपर्यालोचनप्रवणया धिया नवावान्तरग्रन्थिमुद्घटयति, किमिवात्र तत्त्वं स्यादित्याशयेन

---

किं रूपं तत्त्वतो देव ?
शब्दराशिकलामयम् ॥ २ ॥

किं वा नवात्मभेदेन
भैरवे भैरवाकृतौ ।
त्रिशिरोभेदभिन्नं वा
किं वा शक्तित्रयात्मकम् ॥ ३ ॥

नादबिन्दुमयं वापि
किं चन्द्रार्धनिरोधिकाः ।
चक्रारूढमनच्कं वा
किं वा शक्तिस्वरूपकम् ॥ ४ ॥

---

पं० २ क० पु० कुलात्परतरम् इति पाठः ।

पं० ३ क० पु० मालिनी अनुत्तरा इति पाठः ।

पं० ६ क० पु० प्रवणधिया इति पाठः ।

भैरवाकृतौ संसारघट्टनस्वरूपे भैरवभट्टारके, तत्त्वदृष्ट्या शब्दराशेरादि-क्षान्तस्य याः कला अनुत्तरानन्देच्छादिविमर्शशक्तयः क्रोडीकृताशेषवाच्यवाचकमयजगत्स्फाराः ताः प्रकृतं रूपं यस्य बोधभैरवस्य विमर्शशक्त्यात्मकत्वात् तत् किं स्यात् रूपम्? किं वा प्रकृत्यादि-शिवान्तनवतत्त्वावमर्शयुक्त्या विसृष्टषडध्व-नवात्ममन्त्रराजस्वभावतया रूपं स्यात्? किं वा त्रिशिरोभेदे त्रिशिरस्तन्त्रे भिन्नं क्रोडीकृताखिलनरादितत्त्वत्रयामर्शि निर्दिष्टविशिष्टमन्त्रात्मकम्? किं तदधिष्ठातृपरादिशक्तित्रयात्मकम्? यदि वा सर्वमन्त्रचक्रसामान्यवीर्यात्मकविश्ववाच्याविभागप्रकाशरूपबिन्द्वशेषवाचकाविभागपरामर्शमयनादात्मकम्? अथैतद्बिन्दुनादप्रपञ्चरूपार्धचन्द्रनिरोधिकास्तत्त्वतो भैरवे रूपं स्यात्?।

तत्र सर्ववाच्याभिन्नप्रकाशात्मनो बिन्दोर्नादीभवतः किंचिद्वाच्यप्राधान्यशान्तावर्धचन्द्ररूपता, ततोऽपि वेद्यकौटिल्यविगमे स्पष्टरेखात्मा निरोधिका, मितयोगिनां नादानुप्रवेशस्य, इतरेषां तु भेददशावेशस्य निरोधात् तथाख्या, बहुवचनमत्राद्यर्थं नादान्तशक्तिव्यापिनीसमनाख्या नादोर्ध्वकला लक्षयति, तत्र नादस्यैव शब्दव्याप्तेः शाम्यत्तायां सुसूक्ष्मध्वन्यात्मा नादान्तः, प्रशान्तौ तु ह्लादात्मस्पर्शव्याप्त्युन्मेषरूपा शक्तिः, सैव देहानवच्छेदाद् व्योमव्याप्त्यासादाद् व्यापिनी, समस्तभावाभावात्मवेद्यप्रशान्तौ मननमात्रात्मककरणरूपबोधमात्रावेशे समना, इत्येतदर्धचन्द्रादिमन्त्र-

---

पं० ५ क० पु० तत्त्वामर्शेति पाठः।

पं० १० क० पु० नादात्मकत्वम् इति पाठः।

पं० ११ क० पु० भैरवरूपम् इति पाठः।

पं० १४ ख० पु० स्पर्शरेखात्मा इति क० पु० स्पष्टा रेखा इति पाठः।

पं० १५ क० पु० तदाद्या इति पाठः।

पं० १८ ग० पु० देहावच्छेदात् इति पाठः।

कलारहस्यम् । एवं मातृकामन्त्रतद्वीर्यतत्प्रमेयमुखेन विमृश्य ध्येयमहामन्त्रमुखेनापि भगवद्रूपं विमृशति 'चक्रेति' जन्मादिचक्रेष्वारूढं लिपिध्यानेनैव न्यस्तम्, अनच्कं ह-कलात्म नादमयं किं रूपं?, यद्वा प्रशान्ताशेषकौटिल्यसुस्पष्टशक्तिस्वरूपं भैरवे किं रूपम्? इति ॥ २ ॥ ३ ॥ ४ ॥

इत्थं ध्येयमहामन्त्रतच्छक्तिमुखेनापि विमृश्य सर्वोत्तरानुत्तरपराशक्तिमुखेनापि विम्रष्टुमाह

---

परापरायाः सकलम्
अपरायाश्च वा पुनः ।
पराया यदि तद्वत्स्यात्
परत्वं तद्विरुध्यते ॥ ५ ॥

न हि वर्णविभेदेन
देहभेदेन वा भवेत् ।
परत्वं निष्कलत्वेन
सकलत्वे न तद्भवेत् ॥ ६ ॥

---

श्रीपरात्रिंशकादौ मन्त्रविशेषध्येयविशेषात्मकं यत् पराभट्टारिकायाः सकलं रूपमुक्तम् तत् परापरादेव्याः, यद्वा तस्या अपि परांशप्राधान्यात्तदनुपपत्तौ अपरादेव्याः एव भवतीति संभाव्यते । यदि तु पराभट्टारिकाया अपि तदिष्यते, तत् परत्वं नाममात्रेण

पं० ७ क० पु० तत् प्रष्टुमाह इति पाठः ।

स्यात् । वर्णविशेषेण सितादिना, अक्षररूपेण च, देहभेदेन आकृतिविशेषेण द्वादशान्तादिशारीरस्थानविशेषाश्रयेण न वा परत्वं प्रकृष्टत्वं भवति, अपि तु कलनाशून्यत्वेन, सकलत्वे तु तद्भवति इत्यसंभाव्यमेव ॥ ५ ॥ ६ ॥

एवं समग्रागमार्थहृदयविमर्शिना विचारेणाभिमुखीकृतप्रायतत्त्वार्था संविद्देवी स्वां संपूर्णविज्ञानभैरवरूपतामाविविक्षुराह

---

प्रसादं कुरु मे नाथ
निःशेषं छिन्धि संशयम् ।

---

मायामहामायाकालुष्यप्रशमनिर्मलीकृतं स्वं रूपं मम प्रकटय निःशेषमिममेकमेव नवपर्वाणं संशयं शमय ॥

इत्थमामर्शनवशोन्मिषन्निराकाङ्क्षा स्वस्वभावोक्तरूपा देव्येव प्राप्तभैरवभावा उक्तनीत्या उवाच, सर्वस्य चेदृश्येव प्रायः सर्वव्यवहारेष्वपि स्वयं प्रश्नप्रतिवचनचतुरा संवित्, इह तु अनुत्तरार्थविषया इति विशेषः । तदुक्तं श्रीस्वच्छन्दे

'गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः ।
पूर्वोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत् ॥'

---

पं० २ क० ग० पु० विशेषाश्रयणेन वा परत्वम् इति पाठः ।
पं० ९ क० पु० स्वरूपम् इति पाठः ।
पं० ११ क० पु० निराकाङ्क्षस्वभावेति पाठः ।
पं० १३ क० ख० पु० चतुरसंवित् इति पाठः ।
पं० १६ ख० पु० समवतारयेत् इति पाठः ।

इति यदुवाच तत् 'साधु साधु' इति स्वप्रतिभाश्लाघापूर्वं प्रस्तौति

साधु साधु त्वया पृष्टं
तन्त्रसारमिदं प्रिये ॥ ७ ॥
गूहनीयतमं भद्रे
तथापि कथयामि ते ।

हे प्रिये परानन्दतृप्तिप्रथापरे, अत एव भद्रे कल्याणिनि, यत् पृष्टं त्वया सर्वशास्त्रसारभूतं वस्तु, तदतिरहस्यत्वात् गूहनीयतममपि ते अनुत्तमपदसमावेशौन्मुख्येन योग्यतायाः, कथयामि इति प्रतिजानीते ॥ ७ ॥

तत्र हेयहापनपूर्वमुपादेयं हृदि प्ररोहयति

यत्किंचित्सकलं रूपं
भैरवस्य प्रकीर्तितम् ॥ ८ ॥
तदसारतया देवि
विज्ञेयं शक्रजालवत् ॥
मायास्वप्नोपमं चैव
गन्धर्वनगरभ्रमम् ॥ ९ ॥

ध्यानार्थं भ्रान्तबुद्धीनां
क्रियाडम्बरवर्तिनाम् ।
केवलं वर्णितं पुंसां
विकल्पनिहतात्मनाम् ॥ १० ॥

---

संप्रति तावदियती योग्यतैषामुत्पद्यतामिति, न तु तत्त्वबुभुत्सून् प्रति एतदुक्तम् ॥ ८ ॥ ९ ॥ १० ॥

यतः

---

तत्त्वतो न नवात्मासौ
शब्दराशिर्न भैरवः ।
न चासौ त्रिशिरा देवो
न च शक्तित्रयात्मकः ॥ ११ ॥
नादबिन्दुमयो वापि
न चन्द्रार्धनिरोधिकाः ।
न चक्रक्रमसंभिन्नो
न च शक्तिस्वरूपकः ॥ १२ ॥

---

स्वात्मभैरव एव परमार्थतोऽकथ्योऽपि यः कांचित्कल्पनामाश्रित्य

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याद्द्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥'

इति प्रत्यभिज्ञानिरूपितनीत्या उपदिदिक्षाविषयीकृतः स न प्रश्नितनवात्मशब्दराश्याद्यष्टकस्वरूपः ॥ ११ ॥ १२ ॥

किमर्थं तर्हि तत्र तत्र तथा तथोक्त इत्याशङ्कां कृन्तति

---

अप्रबुद्धमतीनां हि
एता बालविभीषिकाः ।
मातृमोदकवत्सर्वं
प्रवृत्त्यर्थमुदाहृतम् ॥ १३ ॥

---

न प्रकर्षेण बुद्धा तीव्रशक्तिपातेन पूता तावन्मात्रोपासोन्मुखीभूता मतिर्येषां, तेषामेता नवात्मादिरूपणाः कदभिनिवेशप्रशमाय बालविभीषिका इव । यथा बालानामवस्त्वभिनिवेशो मिथ्याविभीषिकाभिरपास्यते तथा सांसारिककर्मानुष्ठाननिरतानां विषयाग्रहग्रह एतैर्विभीषिकाप्रकारैः । किं च यथा माता मोदकदानेन बालं सत्कर्मणि प्रवर्तयति तद्वत्सिद्धिसाधनप्रदर्शनेन भगवदाराधने जनः प्रवर्त्यते क्रमात्क्रममासादयितुं परभैरवभावमिति ॥ १३ ॥

यद्येतत् सकलं भैरवस्वरूपं तर्ह्युच्यतां निष्कलं तत्, यत् पराशक्तिविषयसंशयनिर्णोदनमपि भविष्यति इदं तदुच्यते

---

पं० १३ क० पु० विषयग्रह इति पाठः ।
पं० १८ ग० पु० संशयनिर्दलनम् इति पाठः ।

दिक्कालकलनोन्मुक्ता
देशोद्देशाविशेषिणी ।
व्यपदेष्टुमशक्यासा-
वकथ्या परमार्थतः ॥ १४ ॥
अन्तः स्वानुभवानन्दा
विकल्पोन्मुक्तगोचरा ।
यावस्था भरिताकारा
भैरवी भैरवात्मनः ॥ १५ ॥
तद्वपुस्तत्त्वतो ज्ञेयं
विमलं विश्वपूरणम् ।

---

अन्तरिति पूर्णाहन्तायां, स्वानुभवः स्वप्रकाश आनन्द एव रूपं यस्यास्तादृशी, अत एवामूर्तित्वात् पूर्वापरदिक्कालकलना-शून्या, देशेन दूरासन्नादिना उद्देशेन च इदन्तानिर्देश्येन लक्षणी-येन रूपेण न विद्यते विशेषो यस्यास्तादृशी, अत एव व्यपदेष्टु-मशक्या मध्यमाजल्पाविषया, अतश्चाभिधित्सागोचरत्वाभावाद-कथ्या वैखर्याप्यव्यावर्णनीया, परमार्थतो वास्तवेन रूपेण, कल्प-नया त्वदूरविप्रकर्षेण उक्तनीत्या व्यपदेश्या कथ्या च, तदाह । यावस्थेति अवस्थातुर्भैरवरूपस्यात्मनो ममाव्यतिरिक्ता शक्ति-

---

पं ५ क० पु० नन्दविकल्पेति समस्तपाठः ।
पं० १२ क० पु० अमूर्तत्वादेरिति पाठः ।

रवस्था, भरितोऽशेषविश्वाभेदचमत्कारमय आकारः स्वरूपं यस्याः सा तादृशी, तदेव च तत्त्वतः परमार्थतो विमलं स्वभित्त्याभासितजगदनाच्छादितं, विश्वपूरणमशेषावभासकं वपुः स्वरूपं ज्ञेयं, न त्वन्यदाकृत्यादि ॥ १४ ॥ १५ ॥

एवं परस्वरूपं तत्त्वतो विमृश्य यदुक्तं क्रियाडम्बरेति तत् प्रमाणीकरोति

एवंविधे परे तत्त्वे
कः पूज्यः कश्च तृप्यति ॥ १६ ॥

पूज्यपूजकपूजानां तर्पकादीनां च चिदानन्दैकघनपरमार्थत्वात् ॥ १६ ॥

तदित्थं पराभट्टारिकाविषयः संशयः प्रशान्त एवेत्याह

एवंविधा भैरवस्य
यावस्था परिगीयते ।
सा परा पररूपेण
परादेवी प्रकीर्तिता ॥ १७ ॥

परिगीयते इति परिच्छेदार्थं गीयते, भेदेन परं व्यवह्रियते-वस्तुतोऽस्या भैरवैक्यात्, सैषा प्रोक्तेन पररूपेण परा प्रकृष्टा सती परादेवीति, न तु नाममात्रेण निर्वस्तुकेनेत्याशयशेषः ॥ १७ ॥

पं० ९ क० पु० पूज्यपूजकपूजनपूजानाम् इति पाठः ।

ननु भैरवस्यावस्था स्वरूपमेव न तु कालादिकृता उक्तयुक्त्या काचिद्दशास्ति, तद्भैरव एव भैरवीत्युक्तं भवति,?-बाढं प्रतिज्ञात-मित्याह

शक्तिशक्तिमतोर्यद्वत्
अभेदः सर्वदा स्थितः ।
अतस्तद्धर्मधर्मित्वात्
परा शक्तिः परात्मनः ॥ १८ ॥

शकनं शक्तिः सामर्थ्यं विश्वनिर्माणादिकारिभैरवस्वरूपमेव । तदिति तस्य शक्तिमतः संबन्धिना सर्वज्ञता-सर्वकर्तृता-सर्वा-त्मतादिना धर्मेण धर्मिणी शक्तिः परस्य चिदानन्दैकघनस्या-त्मनः ॥ १८ ॥

एतत् दृष्टान्तप्रमुखं घटयति

न वह्नेर्दाहिका शक्तिः
व्यतिरिक्ता विभाव्यते ।
केवलं ज्ञानसत्तायां
प्रारम्भोऽयं प्रवेशने ॥ १९ ॥

न विभाव्यते विचार्यापि नोपलभ्यते, ज्ञानसत्तायां वह्निं जि-

पं० १० क० पु० सर्वात्मतादि धर्मेण इति पाठः ।
पं० १७ क० पु० न इति पदं नास्ति ।

ज्ञासोर्वह्निज्ञप्तौ यत्प्रवेशनं प्रवेशना तत्र, अयमिति दाहोपलब्धि-वशपरिच्छिन्नदाहशक्त्यात्मा वह्निस्वभावः प्रारम्भः, तन्मुखेन पाचकत्वाद्यनन्तशक्त्यात्मशक्तिमत्स्वरूपपरिगतेः, उक्तं च प्रत्यभिज्ञायाम्

'फलभेदादारोपितभेदः पदार्थात्मा शक्तिः'

इति ॥ १९ ॥

दार्ष्टान्तिकयोजनयाह

---

शक्त्यवस्थाप्रविष्टस्य
निर्विभागेन भावना ।
तदासौ शिवरूपी स्यात्
शैवी मुखमिहोच्यते ॥ २० ॥

---

पराशक्तिरूपामवस्थां यदा प्रविशति वक्ष्यमाणोपायैः समाविशति उपदेश्योऽणुः, तदास्य निर्विभागेन भावना भवति – शक्तेः शिवाभेदात्, तदा स लब्धशाक्तबलः प्रशस्ततमशिवस्वरूपो भवत्येव, यतः शिवस्येयं शैवी शक्तिः, मुखं प्रवेशोपायद्वारमिहागमेषूच्यते ॥ २० ॥

एतत् स्फुटदृष्टान्ताभ्यां हृदयङ्गमीकरोति

---

पं० ५ क० ग० पु० फलभेदादित्यादि प्रत्यभिज्ञावाक्यं नास्ति ।
पं० १२ क० पु० यदि इति पाठः ।
पं० १४ ग० पु० शिवाभावात् इति पाठः ।

यथालोकेन दीपस्य
किरणैर्भास्करस्य च ।
ज्ञायते दिग्विभागादि
तद्वच्छक्त्या शिवः प्रिये ॥ २१ ॥

---

यथा आलोकेन प्रकाशेन दीपस्य शिखात्मनो, भास्करस्य च मरीचिभिरेवात्मीयैर्दिग्विभागसंनिवेशादि ज्ञायते, न तु अन्येन दीपादिना, तद्वत् स्फुरत्तारूपया स्वशक्त्यैव शिवः स्वात्मा ज्ञायते प्रत्यभिज्ञायते समाविश्यते इत्यर्थः ॥ २१ ॥

एवं परास्वरूपे निर्णीते तदुपलब्ध्युपायजिज्ञासया श्रीदेव्युवाच

---

देवदेव त्रिशूलाङ्क ?
कपालकृतभूषण ? ।
दिग्देशकालशून्या च
व्यपदेशविवर्जिता ॥ २२ ॥

यावस्था भरिताकारा
भैरवस्योपलभ्यते ।
कैरुपायैर्मुखं तस्य
परादेवी कथं भवेत् ॥ २३ ॥

यथा सम्यगहं वेद्मि
तथा मे ब्रूहि भैरव ।

---

देवानां ब्रह्माद्यनाश्रितान्तानां द्योतनादिसतत्त्वकरणरूपाणां च देव स्वामिन् ?, स्वातंत्र्यशक्तिस्फारितेच्छाद्यरात्रयात्मकत्रिशूलाङ्क ?, समस्तवाच्यवाचकात्मकजगत्खण्डरूपकपालैश्चैतन्यस्वातन्त्र्याभिव्यञ्जकत्वात् कृतभूषण भ्राजमानानाच्छादितस्वरूप ?, दिगित्यादिना भैरवस्येत्यन्तेन प्राग्विभक्तपराशक्तिस्वरूपमनूद्य तदनुप्रवेशप्रकाशनायाह—उपलभ्यत इत्यादि, उपायैरिति बहुवचनमुपलब्धुरणोः प्राणदेहबुद्धिशून्याश्रयोच्चार-करण-ध्यान-वर्ण-स्थानकल्पनाभेदात्, सार्वात्म्यभावनादिशुद्धविकल्पनानात्वात्, अविकल्पोपायवैचित्र्याच्च आणव-शाक्त-शाम्भवोपायनानात्वं वक्ष्यमाणं कटाक्षयति, मुखं तस्येति शैवी मुखमिह, इति यच्छक्तेर्मुखत्वमुक्तं तन्निर्णीतनीत्या भगवदेकात्मनः तस्याः शक्तेः कथमित्येतदुभयप्रश्नितं 'यथा अहं वेद्मि तथा भैरव ब्रूहि'—मामामर्शयेति यावत् ॥ २२ ॥ २३ ॥

---

इत उत्तरं श्रीशिवोपाध्यायकृता विवृतिः ।

---

एवं प्रश्नितवस्तुनिर्णयाय क्रमेण भूमिकाज्ञानानि प्रकाशयति श्रीभैरव उवाच

---

ऊर्ध्वे प्राणो ह्यधो जीवो  
विसर्गात्मा परोच्चरेत् ।  
उत्पत्तिद्वितयस्थाने  
भरणाद्भरिता स्थितिः ॥ २४ ॥

---

योऽयमूर्ध्वं इति हृदो द्वादशान्तं यावत् वहन् प्राणः, यश्चाधो जीवो द्वादशान्तात् हृदन्तमपानः, एषा परादेवी उच्चरेत्, सततं स्वयमुच्चरन्ती स्थिता, कीदृशी विसर्गोऽन्तर्बहिर्भावकरणरूपो विमर्श आत्मा यस्याः सा अप्राणाद्यशाक्तस्पन्दोन्मेषा,— तदाच्छुरणेन विना नियतप्राणप्रवाहायोगात् । तदुक्तं श्रीस्वच्छन्दे

'प्राणः प्राणमयः प्राणो विसर्गापूरणं प्रति ।'

इति । यत एवमत उत्पत्तिद्वितयस्य बाह्याभ्यन्तरोत्पादद्वयस्य यत् स्थानं हृत् द्वादशान्तश्च, तत्र भरणादिति नित्योन्मिषदाद्यस्फुरत्तात्मभैरवीयशक्त्युपलक्षणाद् भरिता स्थितिः भैरवताभिव्यक्तिर्भवतीति यावत् ।

अथ च ऊर्ध्वं इति सर्वेन्द्रियप्रसरेषु प्राणो विषयानुप्राणकः सूक्ष्मप्राणप्रवाहः, यश्चाधो जीवः स्वीकृतसर्वविषयो विशन्नपानः स एवोक्तयुक्त्या परा उच्चरेत्— सततं चकास्ति, ततो ग्राह्योत्पत्तिस्थाने हृदि ग्राहकोत्पत्तिस्थाने च मेयसंघट्टपदे । भरणादिति प्राग्वत् ।

किं च, ऊर्ध्वं इति प्राणापानोन्मेषपदे प्राणोऽशेषवाचकानुप्राणकोऽकारः, अध इति अन्ते जीवः सकार इत्यादि सान्तो मातृकागतो वर्णपुञ्जः, सैषा विसर्गात्मा प्रान्तदर्शितहकारकलात्मना नादरूपा परा उच्चरेत्— मातृकाचक्रक्रमेणाशेषवाच्यवाचकान्तं जगदुल्लङ्घ्य गच्छति,— स्वौजसा भेदपदमभिभूय स्फुरतीति यावत्, अतश्च उत्पत्तिद्वितयस्थाने अकार-हकारौ विमृश्य शिवशक्तिसंघट्टः । हृदि द्वादशान्ते चेति प्राग्वत् ।

---

पं० २ क० पु० सततमुच्चरन्ती इति पाठः ।

अपि च, ऊर्ध्वे इति उत्कृष्टतया प्राणो विश्वानुप्राणक इच्छाज्ञानक्रियाप्रसरः, अध इति इदन्ताविमृश्यतया निकृष्ट ईषणीयज्ञेयकार्यात्मा जीवः, सोमरूपतया संसारिणां जीवितास्थितिहेतुः, सैषा भगवती परा शक्तित्रयात्मना परापरेणापरेण च रूपेणोच्चरेत्—उत्कृष्टतयैव चरन्ती विश्वाभेदस्फुरत्तया प्रसरन्ती सदा स्थितेति कृत्वा उत्पत्तौ मेयपदे, द्वितयशब्दवाच्ये प्रकाश्यप्रकाशकसंघट्टरूपे प्रमाणपदे, स्थान इति तदुभयविश्रान्तिधाम्नि प्रमातृपदे, भरणात् 'त्रिषु चतुर्थं तैलवदासेच्यम्' [ शि० सू० ३–२० ] इति दृष्ट्या पराभट्टारिकात्मतुर्यानन्दाप्लावनात् भरिता स्थितिः ।

अन्यच्च, ऊर्ध्वे इति मायान्ताध्वोपरि प्राणोऽनुप्राणकं शुद्धाशुद्धाध्वव्यापि शिवशक्तितत्त्वं, तस्यैव चाधो जीवः स्वीकृतमायादितत्त्वग्रामं नरशब्दवाच्यमात्मतत्त्वं यावत्, सैषेत्थं परा उच्चरेत्—शैवी स्वातन्त्र्यशक्तिरेवेत्थं जृम्भते । तेन उत्पत्तिद्वितयस्थाने उत्पद्यमानशुद्धाशुद्धाध्वद्वये भरणात् पराशक्तिव्याप्त्या सर्वसर्वमयत्वभावनया तत्सामरस्यापादनाद्भरिता स्थितिः । अत्र व्याख्याने श्रीपरोक्तमन्तव्याप्तिरनुसर्तव्या ।

अपरम्, ऊर्ध्वे प्राणोऽनुत्तराकुलात्मनश्चिद्धाम्नः स्वयमुन्मिषन् हकारः, अधो जीवः सकारो विसर्गात्मा विसर्जनीयानुप्राणितो यः, सैषा हानसमादानहंसीरूपा परैव उच्चरति, अत एव 'अहंसः' इति स्वात्मप्रत्यभिज्ञानविमर्श इवात्रोपलभ्यते । यत एवमतः

---

पं० ११ क० पु० शुद्धाशुद्धव्यापि शिवतत्त्वम् इति पाठः ।

पं० १२ ग० पु० सैषा परा इति पाठः ।

पं० १३ ग० पु० स्वातन्त्र्यशक्तिर्विजृम्भते इति पाठः ।

पं० १४ क० पु० परा शक्तिर्व्याप्त्या इति पाठः ।

पं० १९ ख० पु० अत एव हंस इति पाठः ।

उत्पत्तिद्वितयस्थाने हकारसकारोदयहृद्द्वादशान्तस्थानयोर्भरणात् तद्वर्णविमर्शपरिशीलनयुक्तितः शक्तिबलासादनाद्भैरवीभावो भवति। एवमत्र प्रथमद्वितीययोर्व्याख्यानयोरविकल्पस्वरूपपरिशीलनात्मा शाम्भवावेश उपक्षिप्तः। चतुर्थपञ्चमयोः सर्वाहंभावभावनात्मकशुद्धविकल्पावमर्शरूपः शाक्तः। तृतीयषष्ठयोर्वर्णविशेषावमर्शप्रधान आणवः। यदुक्तं मालिनीविजये

'अकिंचिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः।
उत्पद्यते य आवेशः शाम्भवोऽसावुदाहृतः॥
उच्चाररहितं वस्तु चेतसैव विचिन्तयन्।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते॥
उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः।
यो भवेत्स समावेशः सम्यगाणव उच्यते॥'

शाम्भवसमावेशस्यार्थो यथा—

'अकिञ्चिच्चिन्तकस्येति विकल्पानुपयोगिता।
तया च झटिति ज्ञेयसमापत्तिर्निरूप्यते॥
सा कथं भवतीत्याह गुरुणातिगरीयसा।
ज्ञेयाभिमुखबोधेन द्राक्प्ररूढत्वशालिना॥
तृतीयार्थे तसि व्याख्या वा वैयधिकरण्यतः।
आवेशश्चास्वतन्त्रस्य स्वतद्रूपनिमज्जनम्॥
परतद्रूपता शम्भोराद्याच्छक्त्यविभागिनः।
तेनायमत्र वाक्यार्थो विज्ञेयः प्रोन्मिषत्स्वयम्॥

पं० २ क० पु० युक्तितच्छक्तिबलात् इति पाठः।
पं० ४ ग० पु० सर्वाहम्भावनात्मेति पाठः।
पं० ५ ग० पु० वर्णविमर्शप्रधानेति पाठः।
पं० ८ क० ग० पु० सावुदीरित इति पाठः।
पं० १७ क० पु० ज्ञेयेभिमुखेति पाठः।
पं० २० क० पु० आद्यशक्त्यविभागिन इति पाठः।

मातारमधरीकुर्वत् स्वां विभूतिं प्रदर्शयत् ।
आस्ते हृदयनैर्मल्यातिशये तारतम्यतः ॥
ज्ञेयं द्विधा च चिन्मात्रं जडं चाद्यं च कल्पितम् ।
इतरत्तु तथा सत्यं तद्विभागोऽयमीदृशः ॥
जडेन यः समावेशः स प्रतिच्छन्दकाकृतिः ।
चैतन्येन समावेशस्तादात्म्यं नापरं किल ॥
तेनाविकल्पा संवित्तिर्भावनाद्यनपेक्षिणी ।
शिवतादात्म्यमापन्ना समावेशोऽत्र शाम्भवः ॥
अविकल्पपथारूढो येन येन पथा विशेत् ।
धरासदाशिवान्तेन तेन तेन शिवीभवेत् ॥
निर्मले हृदये प्राग्रस्फुरद्भूम्यंशभासिनि ।
प्रकाशे तन्मुखेनैव संवित्परशिवात्मता ॥
एवं परेच्छाशक्त्यंशसदुपायमिमं विना ।
शाम्भवाख्यं समावेशममन्यन्त निरासिनः ॥'

इति ॥ २४ ॥

अधुना स्वतः सिद्धाः पूरककुम्भकरेचकाः प्राणस्यावस्थाविशेषाः सर्वेषां सकल-प्रलयाकलादीनां प्रमातॄणामयत्नेन संभवन्ति यथा

'बाह्योन्मुखत्वं प्राणानां यद्धृदम्भोजकोटरात् ।
स्वैरमेवात्तयत्नानां तं धीरा रेचकं विदुः ॥
द्वादशाङ्गुलपर्यन्तं बाह्यमाक्रमतां हृदः ।
प्राणानामङ्गसंस्पर्शो यः स पूरक उच्यते ॥

---

पं० १ ग० पु० कुर्वत्–प्रदर्शयत् इति पाठः ।
पं० ३ ख० ग० पु० आद्यमकल्पितम् इति पाठः ।
पं० २० क० पु० सौरमेव इति पाठः ।

अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ॥'

इत्यादिना प्राणापानदशायामेवारोहावरोहक्रमे तच्चिन्तावहितैर्योगिभिर्भूयते इति यद्योगशास्त्रेषु प्रतिपादितं तद्विषयावधानमुपदिशति

---

मरुतोऽन्तर्बहिर्वापि
वियद्युग्मानिवर्तनात् ।
भैरव्या भैरवस्येत्थं
भैरवि व्यज्यते वपुः* ॥ २५ ॥

---

मरुतः प्राणस्यापानस्य चान्तर्बहिश्च यद्वियद्युग्मं – हृदाकाशो द्वादशान्तश्च यद्वियद्द्वयं, ततोऽनिवर्तनान् प्रत्यावर्तनाभावेन क्षणमात्रमन्तर्मुखत्वेनावस्थानात् प्राणापानयोर्द्वयोरस्तंगतत्वात् भैरवी-

---

* पूर्वाधोक्ताद्धेतोः उक्तप्रकारेण वक्ष्यमाणप्रकारेण वा भैरवस्य वपुर्व्यज्यते, भैरवस्य कस्य-भैरव्याः इत्यारोपः अन्वयघटना इयम्, यद्वा भैरव्या वपुर्व्यज्यते-भैरव्याः कस्याः-भैरवस्य भैरवरूपाया इत्यर्थः । परावाग्रूपं हि स्वातन्त्र्यं परमाद्वयजीवितं, नित्यत्वव्यापकत्वादयो हि धर्मा अनेनैवाक्षिप्ताः, इति इदमेवैकं पराहन्ताभासकं निराशंसं तत्त्वं, तदेव केचित् भैरवीस्वरूपं, तदेव केचित् भैरवशब्देन देवीशब्देन च व्यवहरन्ति, एतदधःकारेण उपेयं प्रमातृरूपं यदुच्यते तत् तद्रूपं किम्, अतद्रूपंवा? तद्रूपं चेत् तत् तदेव इति किं वस्त्वन्तरकल्पनाप्रयासेन, अतद्रूपं चेत् तत् तद्वैलक्षण्यात् शून्यप्रायमिवेति तत् दर्शनान्तरसमानम् यतः स्वातन्त्र्यं विना श्रुत्यन्तविदाक्षपादमाध्यमिकानां शून्याभिध-

---

पं० ७ क० पु० युग्मनिवर्तनात् इति पाठः ।
पं० २१ श्रुत्युक्तवदाक्षेपादमाध्यमिकानाम् इति पाठान्तरं च ।

स्वरूपस्य भैरवस्य वपुः 'अन्तः स्वानुभवानन्दा' इत्यारभ्य 'तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम्' इति कृतलक्षणं धर्मिधर्मात्मकत्वेन शिवशक्तिद्वैधं प्रकाशविमर्शस्वरूपं परमार्थत एकमेव तत्त्वं प्रकटीभवेत्, एतदुक्तं भवति—हृदि स्थितात्पद्मयन्त्रात् प्राणस्योदयः, बहिर्द्वादशाङ्गुलपर्यन्ते आकाशे प्राणस्यास्तं गतिः। एवं बाह्याद्द्वादशान्तादपानोदयः, हृत्पद्मयन्त्रे त्वपानस्यास्तम्। एवमनवरतं

'बाह्यानाभ्यन्तरांश्चैतान्कुम्भकादीननारतम्।
प्राणापानस्वभावान् स्वान्बुद्ध्वा भूयो न जायते॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपिवा।
एते न रोधमायान्ति प्रकृत्या हि चलोऽनिलः॥'

इत्याद्युक्तनीत्या सर्वेषां प्रमातॄणां पशुपक्षिमृगादीनां च सर्वदा सर्वत्र रात्रिन्दिवमष्टौ प्राणायामाः स्वतः सिद्धाः पुरुषप्रयत्नानपेक्षाः। ते च

'स्वस्वभावतया बुद्धा यदि स्युस्तर्हि मोक्षदाः।
यत्करोति यदश्नाति बोधेनैताननुस्मरन्।
कुम्भकादीन्नरः सोऽन्तस्तत्र कर्ता न किंचन॥'

इत्युक्तेः। ते च यथा—हृत्कमलाद्बहिर्मुखत्वं स्वेच्छयैव यत् प्राणस्य सा प्राणरेचकावस्था १। हृदयात् सकाशाद्बहिर्द्वादशाङ्गुलपर्यन्तं

---

मनुपासनीयं तत्त्वमिति सर्वथा विमर्शात्मकं स्वातन्त्र्यमेव ज्यायः, तदेव केचित् अम्बररूपत्वेन केचित् अम्बरमूलभूतत्वेन च समादधते, एतच्चाग्रे वक्ष्यामः तस्मात् शोभनमुक्तम् भैरव्या भैरवस्य वपुर्व्यज्यते इति।

पूर्वार्धोक्तादित्यारभ्य—वपुर्व्यज्यते, इत्यन्तव्याख्यास्थलं ख० पुस्तके अधिकं वर्तते, अस्ति चैतत् व्याख्यातो भिन्नं पर्यायरूपं तस्मात् टिप्पणीस्थाने उपन्यस्यते।

---

पं० ४ क० ग० पु० स्थितात्प्राणयन्त्रादिति पाठः।

निःसरतां प्राणानामङ्गसंस्पर्शः पूरकः २ । बहिःप्रदेशात् पुरुषप्रयत्नं विनैवापाने प्रत्यावृत्ते सति योऽङ्गप्रपूरणस्पर्शः सोऽपि पूरकः ३ । अपाने प्रलीने सति हृदयात् प्राणोऽपि यावन्नाभ्युदितस्तावत्कालं कुम्भकावस्था ४ । अस्यामवस्थायां योगिनामेवानुभव इति प्राणवायुः सदा देहाद्बहिरन्तश्च प्राणायामपरः । एवमपानोऽप्यनिशं बहिरन्तश्चापानायामवान्, यथा बहिराकाशेऽस्तंगते प्राणे यावन्नोद्गतोऽपानो भवेत् तावत्कालं बहिः पूरकावस्था अपानस्य १ । तथा अपानस्य द्वादशान्तादुत्थाय यद्रूपपीनत्वं सोऽपि बहिः पूरकः २ । तथा बहिर्द्वादशाङ्गुलपर्यन्तप्रदेशेऽपानस्य मृदन्तरस्थानिष्पन्नघटवद्या स्थितिः सा कुम्भकावस्था अपानस्य ३ । उदयं विना यदपानस्यान्तर्मुखत्वं स बाह्यरेचकः ४ इति प्राणपूरकापानपूरकद्वैध्येऽष्टौ प्राणायामाः । एतान् स्वस्वभावत्वेन जानीयात् । हृत्कण्ठतालुललाटरन्ध्रद्वादशान्ताः प्राणगतिविषयाः । हृत्कन्दाननसंकोचविकासद्वादशान्ता अपानगतिविषयाः । क्षणमस्तङ्गतप्राणमपानोदयरहितमयत्नसिद्धं यद्बाह्यस्थं कुम्भकं, तथा क्षणमस्तङ्गतापानं प्राणोदयरहितमयत्नसिद्धमन्तःस्थकुम्भकं यत्, तदेव परमं पदं मध्यरूपत्वात् । एतदेव मध्यंवासिष्ठे ब्रह्मदर्शने भुसुण्डोपाख्याने

'एतत्तदात्मनो रूपं शुद्धैषा सा परैव चित् ।
एतत्तत्सतताभासमेतत् प्राप्य न शोचते ॥
अस्तं गतवति प्राणे त्वपानेऽभ्युदयोन्मुखे ।
बहिः कुम्भकमालम्ब्य चिरं भूयो न शोचति ॥

पं० १० क० पु० कुम्भकदशा इति पाठः ।
पं० १७ क० पु० मध्ये वासिष्ठब्रह्म इति पाठः ।
पं० २० क० पु० शोच्यते इति पाठः ।

अपानेऽस्तं गते प्राणे किञ्चिदभ्युदयोन्मुखे ।
अन्तःकुम्भकमालम्ब्य चिरं भूयो न शोचति ॥ '

इत्यादिना योगिगम्यप्राणापानमध्यदशाविश्रान्त्या द्वयोरनिवर्तनात् प्रत्यावृत्त्यभावेन तत्तुटि-लव-क्षणमात्रमन्तर्मुखत्वात् मध्यदशाविर्भावः ॥ २५ ॥

मध्यविकासेन प्राणापानयोः प्रवेशनिर्गमाभावमाह

---

न व्रजेन्न विशेच्छक्ति-
मरुद्रूपा विकासिते ।
निर्विकल्पतया मध्ये
तया भैरवरूपता ॥ २६ ॥

---

मरुद्रूपा शक्तिर्न व्रजेत्—हृदो द्वादशान्तं न यायात्, न च विशेत्—द्वादशान्तात् हृदयं न गच्छेत्, केवलं मध्ये मध्यनाडीधाम्नि विकल्पहान्युपायतो विकासिते सति। अत्रायं भावः—दर्शनादीनां सर्वशक्तीनां समूहं स्वे स्वे विषये युगपद्भावेन प्रक्षिप्य स्वं स्वभावं स्पन्दतत्त्वात्मकं तदाधारमवलोक्य निर्विकल्पतया निमीलनोन्मीलनसमाधितायुगपद्व्यापकमध्यभूम्यवष्टम्भादध्यासितैतदुभयविसर्गारणिविगलितसंकल्पभावाक्रमविस्फारितकरणचक्रतया

---

पं० ४ क० पु० भावेन तु तुटिलवेत्यादि पाठः ।
पं० १३ ग० पु० उपाय विकसिते इति पाठः ।

' अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा वै भैरवी मुद्रा सद्यस्तत्पददायिनी ॥ '

इति भैरवी मुद्रानुप्रविष्टत्वे जाते सति मरुद्रूपा शक्तिर्न बहिः प्रसरेत्, नान्तः प्रविशेत्, एवंविधया तया भैरवरूपता भवेत्, तया प्रशमितप्राणापानभावाभिव्यक्तभैरवीयरूपतया भैरवरूपधारी योगी भवति, एतत् श्लोकद्वयं मध्यमधामाश्रया आणवी भूमिः ॥ २६ ॥

---

कुम्भिता रेचिता वापि
पूरिता वा यदा भवेत् ।
तदन्ते शान्तनामासौ
शक्त्या शान्तः प्रकाशते ॥२७॥

---

रेचिता सती कुम्भिता, बहिः पूरिता वा कुम्भिता अन्तर्यदा मरुद्रूपा शक्तिर्भवति, तदा तदन्ते यदेति अभ्यासात् प्रशान्तकुम्भकावस्थोदये भेदोपशमात् शान्ताख्या असौ शक्तिः, शान्तः परमस्वभावः नामरूपातीतः प्रकाशतेऽभिव्यक्तप्रथो भवति ॥२७

---

आ मूलात्किरणाभासां
सूक्ष्मात् सूक्ष्मतरात्मिकाम् ।
चिन्तयेत्तां द्विषट्कान्ते
शाम्यन्तीं भैरवोदयः ॥ २८ ॥

---

पं० २ दर्शिनी इति पाठः ।

पं० ३ भैरवमुद्रा इति पाठः ।

आ मूलात्—आ जन्माधारात् द्वादशान्तं यावत्, किरणाभासां मरीचिरूपां क्रमात्क्रमं तनुतामाश्रयन्तीं तां मरुच्छक्तिं चिन्तयेत् ध्यायेत्, कीदृशीं द्विषट्कान्ते द्वादशान्ते शाम्यन्तीम्, इत्थं सुसूक्ष्मतमस्यापि ध्येयाकारस्य ध्यानप्रकर्षोत्थापितस्यागलनाद्भैरवस्वरूपता भवति ॥ २८ ॥

एतदेव प्रपञ्चयति

---

उद्गच्छन्तीं तडिद्रूपां
प्रतिचक्रं क्रमात्क्रमम् ।
ऊर्ध्वं मुष्टित्रयं यावत्
तावदन्ते महोदयः ॥ २९ ॥

---

तामेव शक्तिं तडिद्रूपां विद्युद्वत् चलद्दीप्त्योज्ज्वलां प्रतिचक्रं कन्दादिब्रह्मरन्ध्रान्तचक्रेभ्यः क्रमात्क्रमम् उद्गच्छन्तीमुल्लसन्तीं चिन्तयेत्, यावत् परं विश्वपूरकं ऊर्ध्वं मुष्टित्रयं द्वादशान्तधाम तावत् महाभैरवैकात्मतोदयः ॥ २९ ॥

---

क्रमद्वादशकं सम्यग्-
द्वादशाक्षरभेदितम् ।
स्थूलसूक्ष्मपरस्थित्या
मुक्त्वा मुक्त्वान्ततः शिवः ॥३०॥

---

जन्माग्र-मूल-कन्द-नाभि-हृत्-कण्ठ-तालु-भ्रूमध्य-ललाट-ब्रह्मरन्ध्र-शक्ति-व्यापिन्याख्यं यत्क्रमाणां चक्राणां द्वादशकं, क्रमेण कुटिलाकृत्यनाहतेन युक्तं यदेतदेव द्वादशकं, तत् सम्यगिति क्रमेणादिविसर्गान्तैर्द्वादशाक्षरै रञ्जितं, षण्ठस्वरवर्जं द्वादश स्वरभेदाः, प्रत्येकं 'स्वाभाविकं चलं दीप्तम्' इति–स्थित्या आदौ ध्यानं स्फुटीकृतम्, ततः स्पन्दमानं, ततोऽपि ज्योतीरूपतां प्राप्तम्, स्थूलं सूक्ष्मं परमित्यभिधीयते, इति सोपानपदक्रमं मुक्त्वा मुक्त्वा परित्यज्य अन्ततोऽन्ते परमशिवभावः ॥ ३० ॥

खेचरीमुद्रामाह

---

तयापूर्याशु मूर्धान्तं
भङ्क्त्वा भ्रूक्षेपसेतुना ।
निर्विकल्पं मनः कृत्वा
सर्वोर्ध्वे सर्वगोद्गमः ॥ ३१ ॥

---

तया जन्मादिचक्राक्रमणशक्त्या प्राणाख्यया अर्धचक्रात्मिकया मूर्धान्तं द्वादशान्तमापूर्य, तथा तमेव द्वादशान्तं भ्रूक्षेपसेतुना भ्रूभेदनक्रमेण सेतुनेव वारिप्रवाहं गुरूपदेशयुक्त्या भङ्क्त्वा, तदनन्तरं निर्विकल्पं मनः कृत्वा, सर्वोर्ध्वे द्वादशान्तादप्यूर्ध्वे परमाकाशे सर्वव्यापकत्वं स्यात् ॥ ३१ ॥

---

शिखिपक्षैश्चित्ररूपै-
र्मण्डलैः शून्यपञ्चकम् ।

---

पं० १४ क्रमेण शक्त्या इति पाठः ।

ध्यायतोऽनुत्तरे शून्ये
प्रवेशो हृदये भवेत् ॥ ३२ ॥

मयूरस्य पतत्राणि आधारत्वेनैषां सन्ति एतादृशैश्चित्ररूपैश्चन्द्र-कैर्दीप्यमानैरपि अन्तर्बहिः शून्यरूपैः सादृश्येन शून्यपञ्चकमूर्ध्वा-धोमध्यपार्श्वद्वयास्थितं पञ्चेन्द्रियेषु शून्यरूपत्वं वा हृदये ध्यायतः परमाकाशसमावेशो भवेत् । शिखिपक्षचित्ररूपैरिति पाठे त्वय-मर्थः – शिखिपक्षवच्चन्द्रकवच्चित्ररूपैः रूपरसादिग्रहणात् नानारूपैः मण्डलैः, मण्डं रससारं लान्तीदृशि मण्डलानीन्द्रियाणि तैः शून्य-पञ्चकं तन्मात्रत्वेनाव्यक्तत्वात् शून्यरूपं विषयपञ्चकं शब्दादिरूपं ध्यायतोऽनुत्तरे शून्ये भैरवरूपे प्रवेशः समावेशो भवेदिति ॥३२॥

ईदृशेन क्रमेणैव
यत्र कुत्रापि चिन्तना ।
शून्ये कुड्ये परे पात्रे
स्वयं लीना वरप्रदा ॥ ३३ ॥

ईदृशेन क्रमेण हानादानरूपेण, आक्रमेण,गुदाधार-जन्म-कन्द-नाभि-हृत्कण्ठ-तालु-भ्रूमध्य-ललाट-ब्रह्मरन्ध्र-शक्ति-व्यापिन्यन्तं यत्र कुत्रापि स्वात्मनोऽन्यत्र स्वात्मवत् परत्रापि व्योम्नि प्राकार-भाजनादौ, यद्वा परे पात्रे निर्मलचित्ते शिष्यादौ चिन्तना स्मरणा,

पं० ५ बाह्य हृदये इति पाठः ।
पं० १२ क० पु० चिन्तनात् इति पाठः ।
पं० १५ ग० पु० हानादानक्रमेण आक्रमणेन इति पाठः ।

स्वयं लीना अहर्निशं स्वदेहान्तः क्रमद्वादशकारोहणगाढतरध्याना-वमर्शनबलात् स्वयमेव लीना सती स्मृतिः वरप्रदा भवेत्—परप्र-काशोदयात्मकोत्कृष्टवस्तुप्रदायिनी भवति । यदुक्तम्

'सर्वोत्तीर्णं रूपं सोपानपदक्रमेण संश्रयतः ।
परतत्त्वरूढिलाभे पर्यन्ते शिवमयीभावः ॥'

इति ।

चिन्तनात् इति पाठे तु पूर्वोक्तां मरुच्छक्तिं प्रथमान्तत्वेन विपरिणमय्य मरुच्छक्तिः मण्डूकप्लुत्या अनुवर्तनीया, तेन चिन्त-नात् हेतोः मरुच्छक्तिः शून्ये बाह्ये कुड्यादौ वा स्वयं लीना सती वरप्रदेत्यन्वयः, बाह्यशून्यकुड्यादिकेऽपि स्वात्मवपुषीव प्राणश-क्तिक्रमद्वादशकं चिन्तनीयमिति तात्पर्यम् ॥ ३३ ॥

---

कपालान्तर्मनो न्यस्य
तिष्ठन्मीलितलोचनः ।
क्रमेण मनसो दार्ढ्यात्
लक्षयेल्लक्ष्यमुत्तमम् ॥ ३४ ॥

---

शिरःकपालमध्ये यदन्तश्छिद्रमस्ति तदन्तरे मनो न्यस्य, कपा-लरन्ध्रस्थिते स्वप्रकाशे प्रभास्वरे ज्योतिषि आलम्बने धारणा-ध्यानसमाधीन् संपादयित्वा [ संपाद्य ] कूणितनेत्रः स्थितः सन् उत्तमं लक्ष्यं लक्षयेत् ।

'मूर्धज्योतिषि सिद्धदर्शनम्' योग० पा० ३ सू० ३१.

---

पं० २ ख० पु० स्वयं लग्ना इति पाठः ।

इति न्यायात्। यद्वा

'कशब्देन पराशक्तिः पालकः शिवसंज्ञया।
शिवशक्तिसमायोगं कपालं परिपठ्यते ॥'

इति तन्त्रकोशयुक्त्या कपालान्तः प्रकाशविमर्शस्वरूपमध्ये

'शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः।'

इति नीत्या शिवशक्तिमयं सर्वं जगत्, इति-विमर्शविषयं मनो न्यस्य, मीलितलोचनः संकुचितभेददृष्टिः सन् सर्वोत्तमं लक्ष्यं पश्यतीत्यर्थः ॥ ३८ ॥

---

मध्यनाडी मध्यसंस्था
बिससूत्राभरूपया।
ध्यातान्तर्व्योमया देव्या
तया देवः प्रकाशते ॥ ३५ ॥

---

मध्यनाडी सुषुम्नाख्या, मध्यसंस्था हृदयमध्यस्था भवतीत्यन्वयः, सूक्ष्मत्वात् मृणालसूत्रतुल्यरूपया ध्यातं चिन्तितमन्तर्व्योम चिदाकाशात्मकं यस्यां सा, तथाविधया देव्या देवः प्रकाशः प्रकाशते, मध्यनाड्यामन्तश्चिदाकाशात्मकं शून्यमेवास्ति, तस्मात् प्राणशक्तिर्निःसरति—इति विमर्शेन प्रकाशप्रादुर्भावः, यद्वा मध्यनाडी मध्यसंस्था चासौ बिससूत्राभरूपा च मध्यनाडी मध्यसं-

---

पं० ६ क० पु० विमर्शमयम् इति पाठः।
पं० १३ क० पु० सुषुम्नाख्या इति वाक्यं नास्ति।
पं० १६ क० पु० चिदात्मकम् इति पाठः।

स्थविसरूपा च इति विशेषणोभयपदः समासः, तया एवं-विधया मरुच्छक्त्या तन्मध्यचिन्तिताकाशया देवः प्रकाशते ॥ ३५ ॥

---

करुरुद्धदृगस्त्रेण
भ्रूभेदाद्वाररोधनात् ।
दृष्टे बिन्दौ क्रमाल्लीने
तन्मध्ये परमा स्थितिः ॥ ३६ ॥

---

अङ्गुष्ठतर्जन्यादिक्रमेण कराभ्यां रुद्धानि दृगुपलक्षितानि मुखरन्ध्राणि येन तादृशस्य योगिनोऽस्त्रेण भ्रूमध्यस्थग्रन्थिविदारणात् हेतोर्बिन्दौ दृष्टे क्रमादेकाग्रताप्रकर्षात् लीने संविद्गगने एव मध्येऽस्य योगिनः परमा स्थितिः भैरवाभिव्यक्तिः स्यादित्यर्थः । अयमत्रान्वयः – कररुद्धदृगस्त्रेण करणेन यत् द्वाररोधनं द्वारस्थगनं तस्मात् हेतोर्यो भ्रूभेदस्तस्माद्धेतोः बिन्दुदर्शनम् । यद्वा द्वारं ब्रह्मद्वारं तस्य रोधनं स्थगनं भ्रूमध्यकृतमेव ततो हेतोः – भ्रूमध्यग्रन्थिविदारणात् हेतोः परसंविद्दर्शनम् । अथवा रोधनादिति ल्यब्लोपे पञ्चमी, तेन सर्वद्वाररोधनं कृत्वा भ्रूग्रन्थिविदारणात् संवित्प्रकाशः ॥ ३६ ॥

---

धामान्तः क्षोभसंभूत-
सूक्ष्माग्नितिलकाकृतिम् ।

---

पं० ७ ख० पु० मुखरन्ध्राणि तादृशेन योगिनोऽस्त्रेण इति पाठः ।
पं० ११ क० पु० अत्राशय इति पाठः ।
पं० १२ क० पु० यो भ्रूभेदस्तस्माद्धेतोः इति वाक्यं नास्ति ।

बिन्दुं शिखान्ते हृदये
लयान्ते ध्यायतो लयः ॥ ३७ ॥

---

धाम्नो लोचनवर्तिनस्तेजसः, अन्तः क्षोभेण अत्यन्तनिष्पीडनादिना संभूतं सूक्ष्माग्नितिलकाकृतिं नयनरश्मिरूपं बिन्दुं द्वादशान्ते हृदि च ध्यायतो, लयान्ते गलितविकल्पे पर्यवसाने, तेजस्तत्त्वसमावेशः स्यादित्यर्थः । यद्वा धाम्नो दीपादितेजसो योऽन्ते निर्वाणताप्राप्तिसमये क्षोभः—चाञ्चल्यं, ततः संभूतं सूक्ष्माग्नितिलकाकृतिं बिन्दुं शिखान्तादौ ध्यायतः ॥ ३७ ॥

---

अनाहते पात्रकर्णे-
ऽभग्नशब्दे सरिद्द्रुते ।
शब्दब्रह्मणि निष्णातः
परं ब्रह्माधिगच्छति ॥ ३८ ॥

---

पात्रे कर्णौ यस्य तस्मिन्, न पात्रे कर्णौ यत्र तादृशि अन्तरुपलभ्ये इति केचित्, तत्त्वतो हि अनाहतध्वनिः कर्णगोचर एव श्रूयते इति साधकाः, सरिद्वत् द्रुते वेगवाहिनि । यद्वा परिश्रुते इति पाठे परितः समन्तात् सर्वेषु प्रदेशेषु निर्गलिते श्रवणगोचरं गते इत्यर्थः । अभग्नशब्दे अहर्निशं विच्छेदनरहितशब्दने, अनाहते न केनचित् आहते स्वरसत एवोत्थिते, नादभट्टारकात्मनि शब्दब्रह्मणि यो निष्णातः कृतधारणाध्यानसमाधिः, स परं ब्रह्माप्नोति

---

पं ५ क० पु० गलितविभवे इति पाठः ।

ब्रह्मैव भवतीत्यर्थः । अविच्छिन्नानाहतध्वनिविषयचित्तैकाग्र्यतया परमाकाशस्वरूपाविर्भावः ॥ ३८ ॥

---

प्रणवादिसमुच्चारात्-
प्लुतान्ते शून्यभावनात् ।
शून्यया परया शक्त्या
शून्यतामेति भैरवि ॥ ३९ ॥

---

प्रणवादयः प्रणवप्रकाराः, आदिशब्दः प्रकारे, यथा—वेदप्रणव ओंकारः, शिवप्रणवः हूंकारः, मायाप्रणवः ह्रींकार इत्यादिबहवः प्रकारास्तन्त्रेषु उद्दिष्टाः, तेषां समुच्चारो ह्रस्वदीर्घप्लुतभेदेनोच्चारः । तथा चाथर्वशिखोपनिषत्

> 'यावसाने चतुर्थ्यर्धमात्रा सा विद्युद्वती सर्ववर्णा पुरुषदैवता, स हि एष ओंकारश्चतुरक्षरश्चतुष्पाद्-श्चतुरक्षरमात्रः स्थूलमेतद्ह्रस्वो दीर्घः प्लुतः ।'

इति ।

> 'ओं ओं ओं इति त्रिरुक्त्वा चतुर्थः शान्तात्मा प्लुतप्रयोगेण समस्तमोमिति प्रयुज्य आत्मज्योतिः सकृदावर्त्य ।'

इति गुर्वक्षरेषु शून्यपात्रध्वनिवत् दीर्घकालमुच्चरितो यः प्लुतो मात्रात्रयपरिमितो वर्णः, एवंविधप्लुतान्ते प्लुतविश्रान्तौ बिन्द्वा-दिप्रमेयानारोहेण शून्यभावनात् शून्यया वेद्यशून्यतामाप्तया परा-

---

पं० १८ ग० पु० कालसमुच्चारित इति पाठः ।
पं० २० क० पु० शून्यताप्तया इति पाठः ।

शक्त्या शून्यतामेति – भेदशून्यपरभैरवतामाप्नोति, अर्धमात्रायाः प्लुतोच्चारणेन हि सूक्ष्मा ध्वनयो बिन्द्वर्धचन्द्राद्या निष्पन्ना भवन्ति, अत एव समुदायशक्त्या अखण्डं ब्रह्म बोधयति प्लुतोच्चारणमिति प्लुतं कृत्वापि यदन्ते शून्यमुच्चारयितुमशक्यमूर्ध्वार्धमात्रात्मकमखण्डचिन्मात्रस्वरूपं तदपि समस्तमन्ते भवति । प्रणवार्थस्तु अकार-उकार-मकारास्तस्य परब्रह्मणो व्यस्तत्वेन वाचकाः चतुर्थेनार्धमात्रास्वरूपेणाक्षरेण समस्तं ब्रह्मतत्त्वं वक्ति प्रणवः

'तस्य वाचकः प्रणवः'

(योगसूत्र पा० १ सू० २.)

इति न्यायात् सर्वविकारातीतं तुरीयं धामाखण्डचैतन्यात्मकमेकं तत्त्वमर्धमात्राया विषयः यत्र परामर्शनीयनिष्ठविशिष्टरूपतास्थगनमेव परामर्शौचित्यस्य जीवितं, तत्र समस्तभावनिर्भरात्मकसंविन्मयपरमेश्वरपरामर्शादौ

'वाक्यार्थे पदवचनं वर्णवचनं तदंशांशवचनम्'

इति वा न्यायेन प्रणवादिबीजपिण्डतदंशगतमेव, प्रत्युत मुख्यं वाचकत्वमिति परिपूर्णाद्वितीयपरमशिववाचकः प्रणव इति निर्णयः। यच्छ्रीमान् पुष्पदन्तः

'त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि स्वरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२९॥'

इति ।

---

पं० २ क० पु० बिन्दुनादाद्या इति पाठः ।

पं० ११ ग० पु० अर्धार्धमात्राया विषय इति पाठः ।

पं० १२ क० पु० निर्भरात्मकं संविदिति पाठः ।

यस्य कस्यापि वर्णस्य
पूर्वान्तावनुभावयेत् ।
शून्यया शून्यभूतोऽसौ
शून्याकारः पुमान्भवेत् ॥ ४० ॥

पूर्वान्ताविति उच्चिचारयिषाविरामौ, शून्यानुगततया भावयेत्, शून्ययेति प्राग्वत्, पुमान् अन्तः शून्याकारः निवृत्तदेहादिप्रमातृताभिमानः ॥ ४० ॥

तन्त्र्यादिवाद्यशब्देषु
दीर्घेषु क्रमसंस्थितेः ।
अनन्यचेताः प्रत्यन्ते
परव्योमवपुर्भवेत् ॥ ४१ ॥

तन्त्रीः आदिरवयवो येषां तानि तन्त्र्यादीनि, तानि च तानि वाद्यानि वादनीयद्रव्याणि, शततन्त्री-परिवादिनी-तुम्बवीणादीनि तेषां ये शब्दाः मूर्छनात्मकाः स्वराः, क्रमास्थित्या दीर्घेषु बहुलेषु तेषु विषये योऽनन्यचेताः तदालम्बनचित्तवृत्तिसंतानयुक्तः तत्तच्छब्दैकाग्रतया परमाकाशतनुर्भवेत्, प्रत्यन्ते तच्छब्दनिवृत्तौ आलम्बनान्तरानुदये परव्योमसमावेशः, दीर्घता अत्रानन्यचेतस्त्वोचितो हेतुः ॥ ४१ ॥

पं० ५ क० पु० शून्यया अनुगतया इति पाठः ।

पूर्वं स्थूलवर्णक्रमानन्तरं बिन्द्वादिप्रमेयानारोहेण प्लुतोच्चारान्ते शून्यभावनामुक्त्वा अधुना सूक्ष्ममन्त्रार्धमात्रात्मारोहदशायां प्लुतान्ते शून्यधारणामाह

---

पिण्डमन्त्रस्य सर्वस्य
स्थूलवर्णक्रमेण तु ।
अर्धेन्दुबिन्दुनादान्तः
शून्योच्चाराद्भवेच्छिवः ॥ ४२ ॥

---

पिण्डमन्त्रः ह्-स्-र्-क्षादिरूपः, अस्य स्थूलो वर्णक्रमः हकारात् प्रभृति षष्ठस्वरान्तः, अस्य नवात्मकस्य परं बिन्दुस्ततोऽर्धचन्द्रः अनन्तरं नादः एतस्य स्वकीयछायापुरुषदर्शनादिसमये बिन्द्वर्धचन्द्रनादानामन्ते पर्यवसाने शून्यरूपात् प्लुतोच्चारात् परमशिवीभावः । स्थूलवर्णक्रमेणेति विशेषणे तृतीया, तेन स्थूलवर्णक्रमेणोपलक्षितस्य पिण्डमन्त्रस्येत्यर्थः । यद्यपि अकारादीनां प्लुतोच्चारसंभवः तथापि उवर्णनिष्पन्नप्लुतोच्चारस्य बाहुल्यं शास्त्रप्रसिद्धत्वं च । यदाह पाणिनिः

'ऊकालोऽज्-ह्रस्वदीर्घप्लुतः'

(अ० १ पा० २ सू० २७.)

इति । अन्ये तु आहुः नाभ्यादिद्वादशान्तं यावत् प्रणवमात्रासोपानेषु आरोहक्रमम्,—नाभौ अकारं, हृदि उकारम्, आनने

पं० १ क० पु० स्थूलमूलक्रमेति पाठान्तरम् ।

पं० ४ ग० पु० मन्त्रस्य इति पाठः ।

पं० १८ क० पु० मात्रोपासनेषु प्रणवसोपानेषु इति पाठः ।

मकारं, भ्रूमध्ये बिन्दुं, ललाटे अर्धचन्द्रं, ललाटोर्ध्वे निरोधिनीं, शिरसि नादं, ब्रह्मरन्ध्रे नादान्तं, शक्तिं त्वक्स्थां, व्यापिनीं शिखामूलस्थां, शिखास्थां समनां, शिखान्तस्थाम् उन्मनामुल्लङ्घ्य द्वादशान्तं यावत् षोडश भूमिका अपि उल्लङ्घ्य सप्तदशे निरञ्जने द्वादशान्तस्थे परमशिवे व्योमाकारे स्वमात्मानं भावयेत्,– इत्येवं लक्षणं कलादीक्षासंप्रदायमुपदिशति 'पिण्डमन्त्रस्य' इति, अत्र बिन्द्वर्धचन्द्रनादान्तेति पठनीयं, बिन्दोरनन्तरं हि अर्धचन्द्रोच्चारः, एवं शरीरं षट्चक्राधारं, तद्रूपो यो मन्त्रः प्रणवाख्यः, 'सोहं' रूपो वा, सोहम्-इत्यत्र सकारहकाररूपहलो लोपे ओमित्यवशिष्यते, यतोऽयं नाभ्यादिद्वादशान्तं यावत् पिण्डे विभक्तः अतः पिण्डमन्त्रः ओंकारः, सोहमित्यजपागर्भितः हृदयविषयेऽत्यर्थं ध्वनति । यदुक्तं

'ओमिति स्फुरदुरस्यनाहतं
गर्भगुम्फितसमस्तवाङ्मयम् ।
दन्ध्वनीति हृदि यत्परं पदं
तत्सदक्षरमुपास्महे महः ॥'

इति । हृत्कण्ठताल्वादिक्रमेण स्वा द्वादश मात्रा अकाराद्या उन्मन्यन्ताः स्थानान्तरेषु नाभ्यादिषु शिखान्तावधिषु विभज्य स्थितः, तस्य यः स्थूलो वर्णक्रमः–उच्चार्याक्षरपरिपाटी, नाभिहृदाननेषु हि मात्रात्रयस्य उच्चार्यत्वात् स्थूलत्वं, बिद्वन्तानां स्थूलवर्णानामुच्चारणकालो मात्रा, बिन्द्वादिसमनान्तानामर्धमात्रा, तदूर्ध्वे तु परमशिवस्थानं, तया स्थूलाक्षरानुपूर्व्या उपलक्षितस्य पिण्डमन्त्रस्य बिन्द्वर्धचन्द्रनादान्तशून्याः, अत्र निरोधिनी-नाद-शक्ति-व्यापिनी-

---

पं० ३ ख० पु० उन्मनामुल्लङ्घ्य इति वाक्यं नास्ति ।
पं० १७ क० पु० स्थावरान्तेषु इति पाठः ।
पं० १९ क० पु० मात्रा तया अस्य इति पाठः ।

समना अनुक्ता अपि द्रष्टव्याः, शून्याशब्देन तु उन्मनी उक्तैव, तेनायमर्थः—बिन्द्वर्धचन्द्र-निरोधिनी-नाद-नादान्त-शक्ति-व्यापिनी-समनोन्मनीनामुच्चारात् द्वादशमात्रोच्चारकालभावनया शिव एव भवेत्। यद्वा अकारादिसमनान्तानां मात्राणां शून्योच्चारात् शून्यताविमर्शनात् उन्मनारूपपरमशिवीभावो भवेत्, समनान्तस्य विश्वस्य हेयत्वात् उन्मनापरतत्त्वसमावेश उपादेयः। उन्मनादीनां लक्षणानि आह नेत्रतन्त्रे

'सा शक्तिः परमा सूक्ष्मा उन्मना शिवरूपिणी।
अस्तित्वमात्रमात्मानं क्षोभ्यं क्षोभयते यदा॥
समना सा विनिर्दिष्टा शक्तिः सर्वाध्ववर्तिनी।
क्रोडीकरोति या विश्वं संहृत्य सृजते पुनः॥
कुण्डलाख्या महाशक्तिस्तृतीयाप्युपचर्यते।
ध्वनिरूपो यदा स्फोटस्त्वदृष्टाच्छिवविग्रहात्॥
प्रसरत्यतिवेगेन ध्वनिनापूरयञ्जगत्।
स नादो देवदेवेशः प्रोक्तश्चैव सदाशिवः॥'

अत्र नादान्तोऽप्यनुप्रविष्टः।

'ध्वनिरध्वगतो यत्र विश्राम्यत्यनिरोधितः।
निरोधिनीति विख्याता सर्वदेवनिरोधिका॥
निरुद्धस्य महेशत्वमहिमा न प्रवर्तते।
असंख्यातास्तु कोट्यो वै मन्त्राणां तत्र संस्थिताः॥
लभते तत्प्रविष्टा वै ..............................

या चेयं निरोधिकाख्या मात्री कला

........................ स बिन्दुश्चेश्वरः स्मृतः।
यदा शिवामृतं मूर्ध्नि पतति सृष्टिकारणम्॥
आप्यायस्तु भवेत्तेन सोऽर्धचन्द्र इति स्मृतः।'

एष चार्धेन्दुः बिन्दुपदात् ऊर्ध्वमारोहतां

' संहारः सर्वभूतानां ..............................

नादादवरोहतां तु

........................ सृष्टिकारणमेव च ॥

मकारो ह्यत्र वै रुद्रो वर्णसंघट्ट उत्तमः ।

यदा स्थितिं तु लभते स्वोन्मुखं सृष्टिकारणम् ।

प्रतिष्ठाख्य उकरस्तु विष्णुः साक्षाद्भवत्यसौ ॥ '

इति ॥ ४२ ॥

---

निजदेहे सर्वदिक्कं

युगपद्भावयेद्वियत् ।

निर्विकल्पमनास्तस्य

वियत्सर्वं प्रवर्तते ॥ ४३ ॥

---

एकाग्रमनाः सर्वासु दिक्षु पुरतो दक्षिणे वामे पृष्ठतश्च अक्रमेण शून्यं भावयेत्, ततस्तस्य परमाकाशसमावेशः ॥ ४३ ॥

---

पृष्ठशून्यं मूलशून्यं

युगपद्भावयेच्च यः ।

शरीरनिरपेक्षिण्या

शक्त्या शून्यमना भवेत् ॥ ४४ ॥

---

ऊर्ध्वाधःशून्यभावनया निराश्रयदेहसंपत्तौ शरीरनिरपेक्षणीयत्वं शक्तेः ॥ ४४ ॥

---

पृष्ठशून्यं मूलशून्यं
　　हृच्छून्यं भावयेत्स्थिरम् ।
युगपन्निर्विकल्पत्वा-
　　न्निर्विकल्पोदयस्ततः ॥ ४५ ॥

---

पृष्ठे ऊर्ध्वे प्रमातृरूपं शून्यतया भावयेत्, मूलमपि अधोदेशात्मकं प्रमेयं तदपि शून्यमिति भावयेत्, हृच्छून्यं हृदयमध्येऽपि प्रमाणात्मके शून्यतां भावयेत्, भावकस्यापि हृदो मध्यवर्तिनः शून्यतात्राधिका, स्थिरमिति क्रियाविशेषणं, निर्विकल्पस्य चिद्धाम्नः उदय अभिव्यक्तिः । श्रीवासुदेवोऽप्याह

' ऊर्ध्वशून्यमधः शून्यं मध्ये शून्यं निराश्रयम् ।
त्रिशून्यं योऽभिजानाति स भवेत्कुलनन्दनः ॥ '

इति । कुलं देहादिशक्त्यन्तं परमाकाशत्वनिष्पादनेनानन्दमयं करोतीत्यर्थः ॥ ४५ ॥

---

तनूदेशे शून्यतैव
　　क्षणमात्रं विभावयेत् ।

---

पं० ७ क० पु० संप्रमातृरूपम् इति पाठः ।
पं० ८ ग० पु० हृदये मध्येऽपि इति पाठः ।

निर्विकल्पं निर्विकल्पो
निर्विकल्पस्वरूपभाक् ॥ ४६ ॥

---

तनूशब्द ऊकारान्तः 'स्त्रियां मूर्तिस्तनुस्तनूः' इति अमरः, तनूदेशे परिमितग्राहकपदे शून्यतैव इत्येतावन्मात्रं क्षणमल्पकालमपि निर्विकल्पं कृत्वा भावयेत्, किं कथं? ऊर्ध्वाधरादिशून्यभावनया इत्याशयः, निर्विकल्प इति निरालम्बनताप्रतिपत्त्या अनाहितग्रासः ॥ ४६ ॥

---

सर्वं देहगतं द्रव्यं
वियद्व्याप्तं मृगेक्षणे ।
विभावयेत्ततस्तस्य
भावना सा स्थिरा भवेत् ॥ ४७ ॥

---

प्रोक्तशून्यभावना यस्य न झगिति हृदयमध्यास्ते, स देहगतमस्थिमांसादि सर्वं द्रव्यं वियता व्याप्तं विशेषेण भावयेत्, तदनन्तरं तस्य संयमिनः सा भावना उपादेयशून्यवासना दृढा भवेत् ॥ ४७ ॥

---

पं० ४ क० पु० परिमितपदे इति पाठः ।

पं० ५ ग० पु० ऊर्ध्वाधरादि भावनया इति, ऊर्ध्वाधारादि इति पाठः ।

पं० ६ क० पु० निरालम्बप्रतियुक्त्या इति पाठः ।

पं० १२ क० पु० यस्य क्रमेणेति इति पाठः ।

देहान्तरे त्वग्विभागं
भित्तिभूतं विचिन्तयेत् ।
न किञ्चिदन्तरे तस्य
ध्यायन्नध्येयभाग्भवेत् ॥ ४८ ॥

---

देहान्तरे स्वस्मिन् देहविषये त्वग्लक्षणो यो विशिष्टो बहिष्ठो भागः तं भित्तिभूतं जडबाह्यभित्तिकल्पं भावयेत्, तस्य चान्तर्न किञ्चिदस्ति इति ध्यायन्नपि अध्येयभाक् परव्याप्तिरूपः स्यात्,— पुर्यष्टकप्रमातृभावोपशमात् ॥ ४८ ॥

---

हृद्याकाशे निलीनाक्षः
पद्मसंपुटमध्यगः ।
अनन्यचेताः सुभगे
परं सौभाग्यमाप्नुयात् ॥ ४९ ॥

---

हृदि भवे हृद्ये, हारिणि च आकाशे प्राणापानान्तरालपदे, निलीनमक्षं मनस्तद्द्वारेण चान्येन्द्रियचक्रं यस्य तादृक्, ऊर्ध्वाधरगतपद्मसंपुटमध्यं गतो—भावनयानुप्रविष्टः, ऊर्ध्वगतं पद्मं प्रमाणं, अधरगतं प्रमेयं, तयोर्मध्ये चिन्मात्राख्ये प्रमातरि स्वस्वरूपे स्थितः, अत एव नान्यस्मिंश्चिन्मात्रातिरिक्ते चेतो यस्य तादृशः सन्, परं

---

पं० ४ क० पु० अध्येयवाक् इति पाठः ।

पं० १३ क० पु० अन्तरालमध्यपदे इति पाठः ।

पं० १४ ग० पु० इन्द्रियपञ्चकम् इति पाठः ।

सौभाग्यं–विश्वेश्वरतास्वरूपं परमानन्दं विकासेन स्पृहणीयतां प्राप्नोत्येव, प्रमेयादिरूपस्य संसारस्य निमेषोन्मेषात्मकसंकोचविकासधर्मकत्वात् पद्मसंपुटेन रूपणा, चित्प्रकाशतामभिनिविशमानं चित्तं तदाच्छुरितं विश्वं पश्यतीत्यर्थः ॥ ४९ ॥

---

सर्वतः स्वशरीरस्य
द्वादशान्ते मनो लयात् ।
दृढबुद्धेर्दृढीभूतं
तत्त्वलक्ष्यं प्रवर्तते ॥ ५० ॥

---

सर्वतो रोमकूपान्तरेषु अपि चैतन्यदेवस्य प्रवेशेन शरीरे द्वादशान्तो योऽस्ति तत्र दृढीभूतं प्राप्तैकाग्र्यं मनो, लयात् विश्रान्तेर्हेतोः, दृढबुद्धेः योगिनः, तत्त्वलक्ष्यं परतत्त्वप्रकाशं प्रवर्तते–प्रसरति ॥ ५० ॥

---

यथा तथा यत्र तत्र
द्वादशान्ते मनः क्षिपेत् ।
प्रतिक्षणं क्षीणवृत्ते-
र्वैलक्षण्यं दिनैर्भवेत् ॥ ५१ ॥

---

यथा तथा इति स्वरसोदितेन येन तेन संवित्प्रसरणप्रकारेण, यत्र तत्र इति पूर्वोक्तेषु मध्यात् यस्मिन् तस्मिन् प्रदेशे द्वादशान्ते,

प्रतिक्षणं मुहुर्मुहुः, मनः क्षिपेत् एकाग्रीकुर्यात्, इत्थं क्षीणवृत्तेः प्रशान्तचाञ्चल्यस्यास्य, दिनैरिति–अल्पेनैव कालेन, वैलक्षण्यम्–असामान्यपरभैरवरूपता भवति, 'यथा यथा यत्र यत्र' इति पाठे तु येन येन प्रकारेण यस्मिन् यस्मिन् विषये मनोनिक्षेपणं तथा तथा तत्र तत्र वैलक्षण्यं भवेदित्यन्वयः ॥ ५१ ॥

---

कालाग्निना कालपदा-
दुत्थितेन स्वकं पुरम् ।
प्लुष्टं विचिन्तयेदन्ते
शान्ताभासस्तदा भवेत् ॥ ५२ ॥

---

ओं र-क्ष-र-य-ऊं तनुं दाहयामि नमः इति दक्षिणपादाङ्गुष्ठात् कालाग्निरुद्रमुत्थितं ध्यात्वा तज्ज्वालया शरीरं भस्मीभूतं भावयेत् इत्येतदाह 'कालाग्निना' इति, कालपदात्–दक्षाङ्गुष्ठात्, स्वकं पुरम्–आत्मीयं देहमेव गुग्गुलम्, शरीरदाहादिचिन्तनयुक्त्या आत्मभावनया दग्धं ध्यायेत् । एषोऽप्याणवोपायः ॥ ५२ ॥

---

एवमेव जगत्सर्वं
दग्धं ध्यात्वा विकल्पतः ।
अनन्यचेतसः पुंसः
पुंभावः परमो भवेत् ॥ ५३ ॥

---

पं० १ क० पु० इत्थं पदं नास्ति ।

पं० २ ग० पु० दिनैः सामान्यभैरवता इतीयानेव पाठः ।

कालाग्निना उत्थितेन, सर्वमिति – देहस्थं बाह्यस्थं च, परमः पुंभावः – अपरिमितप्रमातृभैरवता, इति पूर्वोक्तधारणार्थ एव दृढीकृतः, परं तु पूर्वं स्वपुरदाहचिन्तनमुक्तम् इह सर्वजगद्दाहभावना इति विशेषः ॥ ५३ ॥

---

स्वदेहे जगतो वापि
सूक्ष्मसूक्ष्मतराणि च ।
तत्त्वानि यानि निलयं
ध्यात्वान्ते व्यज्यते परा ॥ ५४ ॥

---

निजदेहविषये, अथवा सर्वस्य जगतः संबन्धीनि यानि सूक्ष्माणि सूक्ष्मतराणि च तत्त्वानि,–प्रकृतिमहदहङ्कारादीनि, तथा पृथिव्यादीनि तद्विकारभूतानि मांसादीनि च यानि सन्ति तेषां निलयं – स्वस्वकारणेषु मृतिदशायां लयं ध्यात्वा, पर्यन्ते परादेवी प्रकटीभवेत्, 'तत्त्वानि यातानि लयम्' इति पाठे तु सर्वतत्त्वानि लयं यातानि नष्टप्रायाणि एव इति ध्यात्वा पराभट्टारिकाविर्भावः ॥ ५४ ॥

---

पीनां च दुर्बलां शक्तिं
ध्यात्वा द्वादशगोचरे ।
प्रविश्य हृदये ध्यायन्-
मुक्तः स्वातन्त्र्यमाप्नुयात् ॥ ५५ ॥

---

प्राणशक्तिमादौ पीनां—पीवरां, ततः क्रमेण कृशां—सूक्ष्मां भवन्तीं, प्राणायामविधिना द्वादशान्ते ध्यात्वा, हृदये च यो ध्यायन् स स्वतन्त्रपरमेश्वररूपः स्यात् ॥ ५५ ॥

---

भुवनाध्वादिरूपेण
चिन्तयेत्क्रमशोऽखिलम् ।
स्थूलसूक्ष्मपरस्थित्या
यावदन्ते मनोलयः ॥ ५६ ॥

---

स्थूलसूक्ष्मपरात्मकभुवनाध्वादिषट्कस्वभावं जगत् ध्यायेदित्याह 'भुवनाध्वेति' अत्रायमर्थः,—वर्ण-मन्त्र-पद-कला-तत्त्व-भुवनाख्यस्य षडध्वनोऽपि परसूक्ष्मस्थूलरूपतावस्थितवाचकतद्वाच्याभासरूपक्रियाशक्तिस्फारस्वरूपत्वम्, तत्राप्यभेदेन विश्वं विमृशन्ति वर्णाः, भेदाभेदाभ्यां मन्त्राः, भेदेन पदानि, पूर्वः पूर्वश्चाध्वा उत्तरत्र व्यापकतया स्थितः, उत्तर उत्तरः पूर्वत्र व्याप्यतयान्तर्भूतः इति सर्वं सर्वत्रास्ति, अत एव गर्भीकृतेतराध्वपञ्चकैकाध्वशुद्धिस्तत्र तत्र शास्त्रे चोदिता । तदुक्तं श्रीस्वच्छन्दे

'भुवनव्यापिता तत्त्वेष्वनन्तादिशिवान्तके ।
व्यापकानि च षट्त्रिंशन्मन्त्रवर्णपदात्मकाः ॥
तत्त्वान्तर्भाविनः सर्वे वाच्यवाचकयोगतः ।
कलान्तर्भाविनस्ते वै निवृत्त्याद्याश्च ताः स्मृताः ॥'

---

पं० ८ क० पु० परात्मकं भुवनेति पाठः ।
पं० १० ग० पु० स्थूलतावस्थितेति पाठः ।

इत्यनन्तादिशिवान्तं यानि भुवनानि तद्व्यापकत्वं तत्त्वेषु, तानि च तत्त्वानि व्यापकानि षट्त्रिंशत्, ये तु अन्ये त्रयोऽध्वानः—मन्त्र-वर्ण-पदात्मकाः, पञ्चाशत् पदानि नवात्मसंबन्धीनि एकाशीतिः, ते च सर्वे तत्त्वान्तर्भाविनः तत्त्वानि अन्तर्भावयन्ति इति कृत्वा, कथं वाच्यवाचकयोगतः तत्त्वादीनि वाच्यानि मन्त्रादयो वाचकाः, कलाशोधनदीक्षायाः प्रस्तुतत्वात् । तदन्तर्भावं तावत् पञ्चाध्वनामाह 'कलान्तर्भाविन' इति । अस्य सर्वाध्वग्रन्थस्यायं पिण्डार्थः,— परमेश्वरश्चिदानन्दघनः स्वतन्त्रभट्टारकः उन्मनाख्यया स्वस्वातन्त्र्यशक्त्या शून्यादिक्षित्यन्तमनन्तं वाच्यवाचकरूपं स्वभित्तौ स्वानधिकमपि अधिकमिव युगपत् अवभासयति, तत्र वाचकं ग्राहकभागावस्थितं परसूक्ष्मस्थूलभेदेन वर्ण-मन्त्र-पदात्मकं त्रिधा, वाच्यमपि ग्राह्यभागाभिनिविष्टं कला-तत्त्व-भुवनात्मकं तथैव । वर्णा हि अभेदविमर्शसाराः किञ्चित्स्थौल्येन भेदाभेदविमर्श-नादात्मकमन्त्ररूपताम् आश्रित्य ततोऽपि स्थौल्येन भेदविमर्शावगमकपद-रूपतया भान्ति । एवं वाच्यरूपा पारमेश्वरी कलाख्या शक्तिः उत्तरोत्तरवैशिष्ट्येन भुवनात्मतां गृह्णाति । वस्तुतश्च इयम् अक्रमैव पारमेश्वरी शक्तिः स्फुरति, तत्रापि च स्वस्वातन्त्र्यात् दर्पणनगरवत् क्रममपि आदर्शयति । क्रमेऽपि च पूर्वं पूर्वम् उत्तरत्र व्यापकतया स्थितं मृदिव घटादौ, उत्तरं उत्तरं तु पूर्वत्र शक्त्यात्मना स्थितं वृक्ष इव स्वबीजे इति सर्वं सर्वात्मकमेव । अत एव पञ्चतत्त्वदीक्षायाम् अनाश्रिततत्त्वपर्यन्ता भूतव्याप्तिर्भविष्यति । एवं च एकैकोऽपि प्रमाता भावो वा, वस्तुतः षडध्वस्फाररूपपारमेशशक्तिमय-आदि-हान्तपरामर्शसाराहन्ताविश्रान्तिसतत्त्वः परभैरवरूप एव । एवं भुवनादिषडध्वात्मकं सर्वं जगत् विमृश्य, तत्र स्थूलतरं किंचित्स्थूले विगाल्य, तं च सूक्ष्मे विलीनं कृत्वा, तं च परे

चिन्मात्रबोधे, इत्थम् अध्वप्रक्रियया शैवतत्त्वविमर्शात्मिकया महोदयः इत्यर्थः। तत्तत्तत्त्वलयक्रमेणापि शून्यताभावना इयम् उक्ता।

'भुवनादित्रयं वाच्यं पदादिवाचकं त्रयम्।
शक्तिरेतच्चाध्वषट्कं शक्तिमांस्तु महेश्वरः ॥'

इति संग्रहः ॥ ५६ ॥

---

अस्य सर्वस्य विश्वस्य
पर्यन्तेषु समन्ततः।
अध्वप्रक्रियया तत्त्वं
शैवं ध्यात्वा महोदयः ॥ ५७ ॥

---

शिवः प्रकाशविमर्शात्मा परमेश्वरः, तस्य इदं 'शैवं तत्त्वं' स्वरूपं 'ध्यात्वा, महोदयः' प्रकाशाभिव्यक्तिः। तेन भुवनतत्त्वकलात्मको वाच्यवर्गः प्रकाशपरमार्थः, वर्णमन्त्रपदस्वरूपो वाचकसमूहः विमर्शवपुः इति उभयसंसर्गारणिस्वभावः उन्मेषनिमेषशक्तिद्वययौगपद्यानुभवचमत्कारं ध्यायेत्। भुवनादि-अध्वपर्यन्तेषु हि जगतः शिवात् विना न किञ्चित् इति जगद्रूपं त्यक्त्वा, शिवमेव ध्यायतो महोदयः स्यात्। उक्तं च कर्मकाण्डक्रमावल्याम्

'त्रयीसप्तचतुर्युग्ममये त्रितयवर्त्मनि।
स्थितो यः शक्तिसहितः स जयत्यमृतेश्वरः ॥'

इति। अयम् अत्र उपाध्यायोपदिष्टोऽर्थः – प्रथमम् अनुत्तरेच्छोन्मेषलक्षणा 'त्रयी' ह्रस्वरूपा, तत आनन्देशनोर्मिषण्ठस्वररूपं सप्तकं, चत्वारः संध्यक्षरवर्णाः, 'युग्मम्' अनुस्वारविसर्जनीय-

लक्षणम्, 'तन्मये' तत्स्वरूपे षोडशकलात्मपुरुषस्वभावे, 'त्रितय-वर्त्मनि'—वर्ण-मन्त्र-पदस्वरूपाध्वत्रये वाचकरूपे अभेदभेदाभेदभे-दाश्रयभूते, 'यो' मृत्युञ्जयः कालदेहापहारी बोधात्मा परमेश्वरः, 'शक्तिसहितः' कलाख्यया स्वशक्त्या तत्त्वभुवनरूपतां गृह्णन्त्या मिलितः। एतेन कला-तत्त्व-भुवनलक्षणस्य अध्वत्रयस्य वाच्यत्वं सूचितम्। एवं-विधस्य अध्वषट्कस्य पर-सूक्ष्म-स्थूलरूपत्वं ज्ञेयम्, वाच्यस्य वाचकान्तर्भूतत्वेन पृथक् निर्देशाभावात् त्रितयवर्त्मनि इत्युक्तम्, शेषं पूर्वोक्तमेव इति अलम् ॥ ५७ ॥

इदानीं बाह्यशून्यतालम्बनक्रमेण आदिशति

---

विश्वमेतन्महादेवि
शून्यभूतं विचिन्तयेत्।
तत्रैव च मनो लीनं
ततस्तल्लयभाजनम् ॥ ५८ ॥

---

'विश्वम्' इति जगत्, 'शून्यभूतं' शून्यातिशून्यताम् आपन्नम्। तत्र लयः तन्मयीभावः ॥ ५८ ॥

---

घटादिभाजने दृष्टिं
भित्तीस्त्यक्त्वा विनिक्षिपेत्।
तल्लयं तत्क्षणाद्गत्वा
तल्लयात्तन्मयो भवेत् ॥ ५९ ॥

---

अन्तःसुषिरे वस्तुनि पार्श्वानि त्यक्त्वा दृष्टिं क्षिपेत्, तत्रैव लयात् विश्रान्तेः, परब्रह्मसमाविष्टो भवेत् ॥ ५९ ॥

दृष्टिबन्धनभावनाम् आह

---

निर्वृक्षगिरिभित्त्यादि-
देशे दृष्टिं विनिक्षिपेत् ।
विलीने मानसे भावे
वृत्तिक्षीणः प्रजायते ॥ ६० ॥

---

'निर्वृक्षादिदेशः' शून्या दिक्, तत्र दृङ्निक्षेपात् 'मानसे भावे' चित्तस्वरूपे, आलम्बनाभावात् 'विलीने' गलिते सति, योगी 'वृत्तिक्षीणः' क्षीणसमस्तवृत्तिः महाप्रकाशरूपो भवति ॥६०॥

निरालम्बभावनाम् आह

---

उभयोर्भावयोर्ज्ञाने
ध्यात्वा मध्यं समाश्रयेत् ।
युगपच्च द्वयं त्यक्त्वा
मध्ये तत्त्वं प्रकाशते ॥ ६१ ॥

---

भावद्वयस्य प्रतीतिकाले 'मध्यम्' अन्तरालं तद्भावद्वयावच्छेदहेतुं शून्यं ध्यात्वा उपलभ्य, सम्यक् ऐकाग्र्येण 'आश्रयेत्'। तत

---

पं० ६ ख० पु० विलीनमानसीभावे इति पाठः ।

पं० १७ ख० पु० ज्ञात्वा-इति पाठः ।

एव च तद्भावद्वयं 'युगपत् त्यक्त्वा' अनालोचनेन परिहृत्य, योगिनः तत्र मध्ये, तत्त्वं–परं धाम व्यज्यते ॥ ६१ ॥

ध्येयाकारभावनाम् आह

---

भावे न्यक्ते निरुद्धा चित्
नैव भावान्तरं व्रजेत् ।
तदा तन्मध्यभावेन
विकसत्यति भावना ॥ ६२ ॥

---

'न्यक्ते' अन्तर्हिते – अदृष्टे 'भावे' पदार्थे त्रिनेत्रचतुर्भुजाद्याकारे ध्येयवस्तुनि, 'चित्' चेतना 'निरुद्धा' अभ्यासपाटवेन नितरां रुद्धा स्थापिता सती, 'भावान्तरम्' अन्यपदार्थं दृष्टदेहघटादिकं 'नैव व्रजेत्'। न्यक्तं–त्रुडितं, तिरोहितम् – अन्तर्हितम् इति वेदभाष्यकारः। 'न्यक्तम्' इति छान्दसः प्रयोगः। 'भावेऽव्यक्ते' इति पाठे तु अकारप्रश्लेषेणापि 'अव्यक्ते' इति पूर्वोक्त एव अर्थः। एवं सालम्बनध्यानयोगे अपि

'ध्यातृध्याने परित्यज्य क्रमाद् ध्येयैकगोचरम् ।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥'

इति योगशास्त्रनीत्या ध्यातृध्याने विहाय, ध्येयनिरालम्बनशून्यमध्यधामविश्रान्तेः उपेयत्वात्, 'तयोः' व्यक्ताव्यक्तयोः भावयोः 'मध्यभावेन' न किंचिद्रूपमध्यधामविश्रान्त्या 'भावना' मध्यदशाविश्रान्तिसंस्कारः, अतिशयेन 'विकसति' उद्बोधम् आयाति,

तेन व्यक्ताव्यक्तभावद्वयादिमध्यान्तदशाव्यापकतद्द्वयैकानुसंधातृ-चिन्मात्ररूपमध्यविश्रान्तिः भवेत् इत्यर्थः ॥ ६३ ॥

पुनः शाक्तीं भूमिकाम् आह

---

सर्वं देहं चिन्मयं हि
जगद्वा परिभावयेत् ।
युगपन्निर्विकल्पेन
मनसा परमोदयः ॥ ६३ ॥

---

आ पादात् केशान्तं 'सर्वं देहं चिन्मयं' प्रत्यंशं चिदेकरूपम्, 'युगपत्' अक्रमं 'जगत् वा' सर्वं 'निर्विकल्पेन मनसा' स्फुरच्चिच्चमत्कारव्याप्त्या, परितः अन्तर्बहिश्च 'भावयेत्'।

'प्रकाशमानं न पृथक् प्रकाशात्, अन्यथा चेत्यमानत्वानुपपत्तेः ।'

इति न्यायात् प्रकाशः प्रकाशते इति भावयेत् ॥ ६३ ॥

---

वायुद्वयस्य संघट्टा-
दन्तर्वा बहिरन्ततः ।

---

पं० २ 'विश्रान्तिर्भवेत्' इत्यतोऽनन्तरं–'भावे एकस्मिन् वस्तुनि निरुद्धा स्वीकृता मध्य एव शून्यरूपे स्थित्या भावना अतिविकसति' इत्यन्तः पाठः ख० पु० अधिको वर्तते ।

पं० ७ ख० ग० पु० परमोद्भवः इति पाठः ।

पं० ८ ख० पु० केशपर्यन्तमिति पाठः ।

योगी समत्वविज्ञान-
समुद्गमनभाजनम् ॥ ६४ ॥

---

'अन्तः' हृदये, 'बहिः' द्वादशान्ते, 'अन्ततः' प्रवेशनिर्गमनयोः पर्यवसाने प्राणापानसंघट्टम् अनुल्लिखितभेदं निर्गमप्रवेशविनाकृतं शून्यकल्पं ध्यात्वा [योगिनः] समदृष्टित्वम् उदियात् ॥ ६४ ॥

---

सर्वं जगत्स्वदेहं वा
स्वानन्दभरितं स्मरेत् ।
युगपन्स्वामृतेनैव
परानन्दमयो भवेत् ॥ ६५ ॥

---

'स्वानन्दभरितं' त्यक्तविषयात्मानन्दं, 'स्वामृतेनैव' स्वानन्देन भरितं स्वानन्दभरितं स्वकीयचिदानन्दपूर्णं 'सर्वं' चिन्तयेत् ।

'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥'

इति वाजसनेयब्राह्मणश्रुतेः । इह आश्यानचिद्रसरूपस्य जगतोऽपि भासनात्

'सर्वं देहं चिन्मयं हि······ ।'

इति पूर्वस्याः प्रकाशधारणायाः सकाशात् विशेषः ॥ ६५ ॥

---

पं० ३ क० पु० अन्तः प्रवेशेति पाठः ।

कुहनेन प्रयोगेन
सद्य एव मृगेक्षणे ।
समुदेति महानन्दो
येन तत्त्वं प्रकाशते ॥ ६६ ॥

---

'सद्य एव' विस्मयजनकः, 'कुहनप्रयोगः' अद्भुतमाया-प्रयोगः, ऐन्द्रजालिकरचितमायीयोद्यान-तत्स्थितचित्रकुसुमवृक्षादि-तत्स्थस्वात्मविहरणस्वाङ्गच्छेदन-पुनस्तत्संयोजनादि-अत्यद्भुतत्व-जनककुहनप्रयोगदर्शने योगिनो निर्विकल्पावस्था तत्क्षणमेव भवेत् इत्यर्थः ॥ ६६ ॥

अधुना प्राणापानगतिविच्छेदविधियोगाभ्यासकालेऽपि परमा-नन्दावाप्तिः स्वयमेव यदा भवेत् तदुपदेशम् आह

---

सर्वस्रोतोनिबन्धेन
प्राणशक्त्योर्ध्वया शनैः ।
पिपीलस्पर्शवेलायां
प्रथते परमं सुखम् ॥ ६७ ॥

---

श्रोत्र-चक्षुर्नासा-मुख-गुह्योपस्थरन्ध्रनिरोधेन, आधारात् द्वाद-शान्तं यावत् ऊर्ध्वं क्रमेण वहन्त्या 'प्राणशक्त्या' द्वादशान्ते

---

पं० ६ क० पु० मायोद्यानेति, ग० पु० कुसुमवृक्षेति च पाठः ।

आत्मविषयानुभवसमये 'पिपीलस्पर्शवेलायां' पिपीलिकाया इव शनैः चरतः प्राणस्य यः 'स्पर्शः' जन्माग्रादिसकाशात् मूलकन्दादिस्थानस्पर्शः । तद्वेलायां हि योगिनः परीक्षन्ते—अमुतः स्थानात् उत्थाय अद्य अदः स्थानं प्राणः प्राप्तः इति । अत्र इयं योगशास्त्रप्रक्रिया श्रीभगवता पतञ्जलिना निगदिता

'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः
परिदृष्टो दीर्घसूक्ष्मः ।' (२ । ५०)

इति श्वासप्रश्वासयोः प्राणापानधर्मयोः या गतिः—पुरुषप्रयत्नम् अन्तरेण स्वाभाविकप्रवहणं, क्रमेण युगपच्च पुरुषप्रयत्नविशेषेण तस्या विच्छेदो निरोधः प्राणायामः । तस्मिन् सति

'श्वासप्रश्वासयोः गतिविच्छेदलक्षणः प्राणायामः ।' (२।४९)

इति हि उक्तम् । बाह्यगतिनिरोधरूपत्वात् बाह्यवृत्तिः पूरकः, आन्तरगतिनिरोधरूपत्वात् आन्तरवृत्तिः रेचकः । कैश्चित्तु बाह्यशब्देन रेचकः, आन्तरशब्देन च पूरको व्याख्यातः, युगपत् उभयगतिनिरोधः स्तम्भः, तद्वृत्तिः कुम्भकः । तदुक्तं—'यत्र उभयोः श्वासप्रश्वासयोः सकृदेव विधारकात् प्रयत्नात् अभावो भवति, न पुनः पूर्ववत् आपूरणप्रयत्नौघविधारणम्, नापि रेचनप्रयत्नौघविधारणम्, किं तु यथा तप्ते उपले निहितं जलं परिशुष्यत् सर्वतः संकोचम् आपद्यते'—एवम् अयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्नावरुद्धक्रियः शरीर एव सूक्ष्मभूतोऽवतिष्ठते, न तु पूरयति येन पूरकः, न तु रेचयति येन रेचकः इति । त्रिविधोऽयं प्राणायामः 'देशेन, कालेन, संख्यया च परीक्षितो दीर्घसूक्ष्मसंज्ञो भवति' यथा घनीभूतस्तूलपिण्डः प्रसार्य-

---

पं० १ क० पु० अनुभवविषये इति पाठः ।

पं० १३ क० पु० अन्तर्गति इति पाठः ।

माणो विरलतया दीर्घः सूक्ष्मश्च भवति, तथा प्राणोऽपि देशकालसंख्याधिक्येन अभ्यस्यमानो दीर्घो दुर्लक्षतया सूक्ष्मोऽपि संपद्यते । तथाहि — हृदयात् निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्ते देशे श्वासः परिसमाप्यते, तत एव च परावृत्त्य हृदयपर्यन्तं प्रविशन्ती स्वाभाविकी प्राणापानयोः गतिः, अभ्यासेन तु क्रमेण नाभेः आधारात् वा निर्गच्छति, नासान्तश्चतुर्विंशत्यङ्गुलपर्यन्ते षड्विंशदङ्गुलपर्यन्ते वा देशे समाप्यते । एवं प्रवेशोऽपि तावान् अवगन्तव्यः । तत्र बाह्यदेशव्याप्तिः निवाते देशे इषीकादिसूक्ष्मतूलक्रियया अनुमन्तव्या, अन्तरपि पिपीलिकास्पर्शसदृशेन स्पर्शेनानुमन्तव्या,—सा इयं देशपरीक्षा । तथा निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणः, तेषाम् इयत्ता अवधारणीया, स्वजानुमण्डलं पाणिना त्रिः परामृश्य छोटिकावच्छिन्नः कालो मात्रा, ताभिः षड्त्रिंशन्मात्राभिः प्रथम उद्घातो मन्दः, स एव द्विगुणीकृतो द्वितीयो मध्यः, स एव त्रिगुणीकृतः तृतीयः तीव्रः इति । नाभिमूलात् प्रेरितस्य वायोर्विरिच्यमानस्य शिरसि अभिहननम् उद्घातः इति उच्यते, सा इयं कालपरीक्षा । संख्यापरीक्षा च प्रणवजपावृत्तिभेदेन वा श्वासप्रवेशगणनया वा । यद्यपि कुम्भके देशव्याप्तिः न अवगम्यते, तथापि कालसंख्याव्याप्तिः अवगम्यते एव । स खल्वयं प्रत्यहम् अभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्याप्तितया दीर्घः, परनैपुण्यसमधिगमनीयतया च सूक्ष्मः, प्राणस्य सूक्ष्मीभवनं मनःप्रशान्तिप्रयोजनं, मनःशान्त्या प्राणशान्तिः, प्राणशान्त्या विकल्पक्षयः इति कष्टयोगस्यापि निर्विकल्पदशाप्राप्तिः प्रयोजनम् इति अलम् । तदे-

पं ८ क० पु० बाह्ये देशे इति पाठः ।

पं० १९ क० ग० पु० प्रत्यहमेत्यस्तम् इति पाठः ।

तदुक्तं – पिपीलस्पर्शवेलायां देशकालादिपरीक्षया परानन्दावाप्तिः इत्यर्थः ॥ ६७ ॥

मध्यविकासकारणं शक्तिसंकोच-शक्तिविकासोपायम् आह

---

वह्नेर्विषस्य मध्ये तु
चित्तं सुखमयं क्षिपेत् ।
केवलं वायुपूर्णं वा
स्मरानन्देन युज्यते ॥ ६८ ॥

---

अनुप्रवेशक्रमेण संकोचभूमिः वह्निः, नासापुटोर्ध्वस्पन्दनक्रमोन्मिषत्सूक्ष्मप्राणशक्त्या भ्रूभेदनक्रमासादितोर्ध्वकुण्डलिनीपदे तद्विश्रान्तिरूपसंकोचस्थानं विषस्थानं प्रसरयुक्त्या विकासपदम् । अधः कुण्डलिन्यां षष्ठवक्त्रगुह्याधाररूपायां प्राणशक्तिं प्रगुणीकृत्य, प्रसररूपो विकासः तन्मूल-तदग्र-तन्मध्यभूमिस्पर्शावेशः । अनयोः वह्निविषयोः मध्ये – मध्यनाड्यां सृष्टिग्रन्थिभूतायाम् आनन्दमयं मनः भावनया क्षिपेत् – चिन्तयेत् । वायुनिर्गमप्रवेशधारणां विहाय मध्यभूते उन्मेषभट्टारके तन्निर्गमप्रवेशकारणे तद्द्वयैकानुसंधात्रात्मके तद्धारणया आनन्दमयं चित्तं क्षिपेत् । केवलम् आरोहावरोहविषयसंबन्धरहितं वायुपूर्णं च मध्यनाडीस्थिताक्रमोच्चारानच्ककलात्मकप्राणशक्तिभरितं च । ततः स्मरानन्दमयो भवेत्, स्मरा-

---

पं ३ क० पु० संकोचविकासेति पाठः ।

पं १० क० विषं पु० स्थानमिति पाठः ।

पं० १५ क० पु० कारणात् द्वयेति पाठः ।

नन्देन कामानन्देन युज्यते । सर्वविषयविस्मारकारणत्वात् कामानन्दस्य आनन्दान्तरेभ्यः परत्वम् ।

यद्वा, वह्निः मेढ्रात् ऊर्ध्वं नाभ्यधोऽङ्गुलानां चतुष्टये अग्निर्नाम पवनाधारः षोडशपवनाधारमध्ये गणितः । विषनामा पवनाधारो मेढ्रमध्ये ज्ञेयः । तयोः पवनाधारयोर्मध्ये सुखमयचित्तनिक्षेपणम् । श्रुतमतप्रकारैव भावना कर्तव्या इति हि योगिसंप्रदायः । ततः कामानन्दावाप्तिः । षोडशाधारास्तु कुलाम्नाये कथिताः

'मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः ।
मूले तु शाक्तः कथितो बिन्दुनादप्रवर्तकः ॥
अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये ।
नाभ्यधः पवनाधारो नाभावेव घटाभिधः ॥'

इत्यादि । इयं स्थानध्यानाश्रया आणवी भूः ॥ ६८ ॥

---

शक्तिसंगमसंक्षुब्ध-
शक्त्यावेशावसानिकम् ।
यत्सुखं ब्रह्मतत्त्वस्य
तत्सुखं स्वाक्यमुच्यते ॥ ६९ ॥

---

शक्तिसंगमः स्त्रीसंगः, तेन संक्षुब्धः संप्रवृत्तः, शक्त्यावेशः आनन्दशक्तिसमावेशः, तदावसानिकं तत्पार्यन्तिकम् ।

'न सृष्टिर्जायते लिङ्गान्न भगान्नापि रेतसः ।
आनन्दोच्छलिता शक्तिः सृजत्यात्मानमात्मना ॥'

---

पं० ७ क० पु० आनन्दव्याप्तिरिति पाठः ।

इति उक्तरीत्या स्त्रीसंगानन्दाविर्भूतानन्दशक्तिसमावेशान्ते यत् घण्ट्यनुरणनरूपं ब्रह्मतत्त्वस्य सुखं परब्रह्मानन्दः, त्यक्तस्त्रीपुरुषद्वैतपर्यालोचनं स्वात्ममात्रनिष्ठं, तत् सुखं स्वकमेव स्वाक्यम् ( स्वार्थे ष्यञ् चातुर्वर्ण्यत्रैलोक्यादिवत् ) आत्मन एव संबन्धि, न अन्यत आयातं भावयेत् । स्त्रीसंगस्तु अभिव्यक्तिकारणमेव, यतः स्वक एव स आनन्दः, ततश्च स्त्रीसङ्गेन य आनन्दः अनुभूयते तामेव स्त्रियं ध्यात्वा आनन्दमयो भवेत् इति भावः । उक्तं च

‘ जायया संपरिष्वक्तो न बाह्यं वेद नान्तरम् ।
निदर्शनं श्रुतिः प्राह मूर्खस्तं मन्यते विधिम् ॥ ’

इति । विश्वस्फुरणशक्तिसंगमसंक्षुब्धा या चिच्छक्तिः तस्या य आवेशः इति केचित् ॥ ६९ ॥

---

लेहनामन्थनाकोटैः
स्त्रीसुखस्य भरात्स्मृतेः ।
शक्त्यभावेऽपि देवेशि
भवेदानन्दसंप्लवः ॥ ७० ॥

---

लेहनं वक्त्रासवास्वादनं, परिचुम्बनं इति यावत् । मन्थनं प्रधानाङ्गविलोडनम् आलिङ्गनं वा । आकोटः पुनःपुनर्मर्दनम् नखक्षतादिः वा । शक्त्यभावः स्फुटस्त्र्यादीनां कारणानामभावः । शक्त्यभावेऽपि इत्यनेन स्वकीय एव स आनन्दः तत्संमुखीभावेन आयातो, न पुनः तत्र स्त्री कारणम् इति स्वमेव आत्मानं सानन्दमयं ध्यायेत् इत्यर्थः । लेहनाद्यैः स्त्रीसुखस्य स्मरणभरात्

पं० २१ क० पु० लेहनाद्यः इति पाठः ।

आनन्दः इति । भरात् स्मर्यमाणो हि स स्पर्शः तत्स्पर्शक्षेत्रे च मध्यमाकृत्रिमपराशक्तिनालिकाप्रतिबिम्बितः उन्मुखशाक्तस्पर्शाभावेऽपि तदन्तर्वृत्तिशाक्तस्पर्शात्मकवीर्यक्षोभकारी भवति इति अभिनवगुप्तपादाः ॥ ७० ॥

---

आनन्दे महति प्राप्ते
दृष्टे वा बान्धवे चिरात् ।
आनन्दमुद्गतं ध्यात्वा
तल्लयस्तन्मना भवेत् ॥ ७१ ॥

---

स्फुटक्रियादिशक्तिभावे सति महानन्दप्राप्तिः इत्यर्थः । दारिद्र्याद्युपद्रुतस्य कस्यचित् अनन्तनिष्कण्टककोशप्राप्तेः महान् आनन्दः तस्मिन् प्राप्ते सतीत्यर्थः । चिरकालं प्रवासात् आगते इष्टे बान्धवे पुत्रमित्रादौ प्राप्ते सति आनन्दम् उद्गतं ध्यायेत्, उद्गतमात्रमेव गृहीत्वा तद्ध्यानान्तर्मनस्कत्वेन आनन्दे एव विश्रान्तः स्यात् इत्यर्थः ॥ ७१ ॥

---

जग्धिपानकृतोल्लास-
रसानन्दविजृम्भणात् ।
भावयेद्भरितावस्थां
महानन्दस्ततो भवेत् ॥ ७२ ॥

---

पं० २ क० पु० तन्मुख्यशाक्तेति पाठः ।

क्षुदतिशयनिवर्तकयत्किंचिन्मात्रभक्ष्यादिभक्षणं जग्धिः, पिपासातिशयनिषेधकशीतलजलादेः मधुरक्षीरादेर्वा आस्वादनं पानं, ताभ्यां प्रतिग्रासं प्रतिसिक्तं प्रतिबिन्दु तुष्टिपुष्टिक्षुन्निवृत्त्याख्यकार्यत्रयहेतुभ्यां कृता ये उल्लासरसानन्दाः, करचरणादीनां स्वाङ्गानां स्पर्शनादिविमर्शनेन उच्चैः द्योतनम् उल्लासः, सर्वासु स्थूलसूक्ष्मगर्भनाडीषु शुष्कताया अभावे स्नेहार्द्रतालक्षणो रसः, भोजनाद्यभावे हि नाडीनां रूक्षता जायते, तद्भावे तु रसवितननम्, तदनन्तरम् आनन्दः, अहंविमर्शसंचेतनं रसरूपो वा आनन्दः इति वा ।

'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति ।'

इति श्रुतेः, तस्य 'विजृम्भणात्' सर्वगात्रविषयविकसनात् हेतोः स्वदेहपूर्णतादशां भावयतो महानन्दप्राप्तिः इत्यर्थः । ये तु रसनीयवीरद्रव्यपानावदंशचर्वणादिना आनन्दविकासात् भरितावस्थाम् अभिदधति, तत्र अत्युन्मादविधायिभावकवलने स्वानन्ददशावमर्शनविषये सहृदया एव प्रमाणम् इति त एव प्रष्टव्याः,– तादृग्दशायां तत्त्वचिन्ता किम् अस्ति इति । यदि पुनः तत्रापि तेषाम् अवहितचित्तत्वं भवेत् तर्हि तेऽतिधन्याः सर्वपूज्याः सर्वनमस्कार्या महाचाराः इति तान् न निन्देत्, किं तु नमस्येत् ।

'न निन्देदथ वन्देत वीरद्रव्यपरान्नरान् ।'

इत्युक्तेः ॥ ७२ ॥

---

गीतादिविषयास्वादा-
समसौख्यैकतात्मनः ।

योगिनस्तन्मयत्वेन
मनोरूढेस्तदात्मता ॥ ७३ ॥

---

गीतं गायनं – ऊर्ध्वमध्याधोग्रामत्रयस्थस्वरावृत्त्या उच्चारणं, हालाकपाठकनिवर्तितं शब्दनम् इति यावत्, आदिशब्देन स्पर्शरूपरसादिग्रहणम्, तेन शब्दादिविषयाणां यत् आस्वादनं श्रवणेन्द्रियवृत्त्या गीतशब्दग्रहणं तच्चमत्करणम्, एवम् अतिसुन्दररूपवद्दर्शनचमत्कारः, तथा मधुरादिरसचर्वणास्वादः, तस्मात् हेतोः यत् असमं अनुपमं – स्वानुभवगम्यं सौख्यम्, तेन या एकता, तद्रूपः आत्मा यस्य योगिनः, तस्य मनोरूढेः हेतोः यत् तन्मयत्वं – शाक्तस्पर्शावेशः, तेन हेतुना तदात्मता – परब्रह्ममयत्वापत्तिः । एषापि शांभवी भूः ॥ ७३ ॥

---

यत्र यत्र मनस्तुष्टि-
र्मनस्तत्रैव धारयेत् ।
तत्र तत्र परानन्द-
स्वरूपं संप्रवर्तते ॥ ७४ ॥

---

मनस्तुष्टिः इति मनसः प्रमोदः, न तु मनःक्षोभो वक्ष्यमाणः । यस्मिन् यस्मिन् वस्तुनि मनोहरे कामिनीवदनकमलादौ मनः सज्जते, तत्रैव धारयेत् स्थिरं कुर्यात् मनः, न तु मनोनियमनम्

---

पं० १० क० मु० यदात्मता इति पाठः ।
पं० १८ क० पु० स्थितमिति पाठः ।

अकृत्वा नानाविधविकल्पक्षोभैः स्वात्मानं योगारूढत्वदशाया अधः पातयेत् । मनसो धारणमपि इत्थं कामादिक्षोभं प्रशमय्य, अत्र नितम्बिनीसुन्दरकायमन्दिरे 'चिदानन्दात्मकः शिवोऽहम् अस्मि, ममैव इयं भङ्गिः' इति यथाशक्ति, न पुनः केवलकामपरतन्त्रतया करचञ्चत्कुचपरपरिमर्दन-पेशलकोमलकुन्तलकर्षणललनाविरचितचक्षुःकूणन-बाहूद्धूनन-सीत्कृतिबोधन-त्वरितसभाजन-मानन-स्वरचितवेणीग्रहण-वशीकृतपश्चात्ग्रीवानवरतप्रेङ्खोलनसंदर्शन-प्रसृतोत्क्षेपण-करनखलेखन-रदनोद्वर्तितमञ्जुकपोलद्वन्द्वोच्चुम्बन-सक्थिश्लेषण-स्वप्रोथद्वयपृथुलविघट्टन-श्यामारक्ताधरभवषष्ठवर्णप्लुतसंबोधन-दीपितमन्मथवह्न्युट्टङ्कितप्रजननतेजन-यष्टिप्रक्षेपणसंघट्टन-रेतःसिञ्चनपर्यन्तक्षोभविधानेन आत्मानं गर्ते पातयेत् । यदुक्तम् अत्रैव अग्रे

'कामक्रोधलोभमोहमदमात्सर्यगोचरे ।
बुद्धिं निस्तिमितां कृत्वा............ ॥'

इति कामादिक्षोभं स्वात्मनि प्रशमय्य, एकाग्रां निश्चलां मतिं विधाय, तत् तत्त्वं सामान्यस्पन्दात्मकं प्रत्यवमष्टुम् अवशिष्यते इति भावः । तत इह मनस्तुष्टिः इति मनो नियच्छेत् इति च सूक्तम् । अन्यथा तु तत्रभवज्जगद्गुरुवासुदेववचनव्याघातापत्तेः । यथा

'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥'

(गीता अ० १६ श्लो० २१–२२).

---

पं० ७ क० पु० सानन्दनस्वरचितेति पाठः ।

इति । तथा

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।' (१।९)

इति स्पन्दोपदेशानर्थक्यापत्तेश्च । रूपातिशयं दृष्ट्वापि स्वशक्त्यनुसारेण पूतः असक्तो भवेत्, न तु अपवित्रः । मुमुक्ष्वभिप्रायेण अयम् अर्थो निर्वाहितः । मुक्तानां तु एवंविधक्षोभकल्लोलोदयदशा नैव भाविनी, तेषां समाधिषट्कपरिपाकलब्धनित्यसमाधिसाक्षात्कारः । समाधिषट्कलक्षणम् अग्रे व्याख्यास्यामः । सप्तमश्च नित्यसमाधिसाक्षात्काररूपः । समाधिश्च व्याख्यास्यते, एतदभिप्रायेण अग्रे वक्ष्यति

'यत्र यत्र मनो याति बाह्ये वाभ्यन्तरेऽपि वा ।
तत्र तत्र शिवावस्था व्यापकत्वात् क यास्यति ॥'

तथा

'चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः ।'

इति ।

'देहेऽपि विस्मृते यस्य चिद्विमर्शस्य भावनात् ।
महात्मनो विरक्तस्य भोगासङ्गो न रोचते ॥'

इति उक्तत्वात् देहाभिमान एव भोगासक्तिजनकः, मुक्तस्य तु तदपायात् भोगविषयारुचिरेव, यदि कदाचित् तस्यापि प्रारब्धकर्मशेषवशात् जातु अपि संभवेत्, तत् कादाचित्कमेव जगति, न तु सर्वत्र प्रायिकम् इति न कश्चित् दोषः ॥ ७४ ॥

---

पं० ८ क० पु० व्याख्यायिष्यते इति पाठः ।

पं० ११ क० पु० यास्यसि इति पाठः ।

पं० १३ क० ख० पु० कुत्र यास्येत इति पाठः ।

अनागतायां निद्रायां
प्रणष्टे बाह्यगोचरे ।
सावस्था मनसा गम्या
परा देवी प्रकाशते ॥ ७५ ॥

---

अनागतायां निद्रायां – चित्तवृत्तेः तमश्छादने, बाह्ये च विषयपञ्चके विनष्टदर्शने, या अवस्था निरावरणा मध्येऽस्ति, सा मनसा गम्या – स्वसंविदवष्टम्भस्वीकार्या, तथा सति सैव परादेवीत्वेन भाति इति एषापि शांभवी भूः ।
तथा च वासिष्ठे दर्शने

'निद्रादौ जागरस्यान्ते यो भाव उपजायते ।
तं भावं भावयन्साक्षादक्षयानन्दमश्नुते ॥'

इति ॥ ७५ ॥

बाह्यसूर्यादितेजश्छुरिताकाशालम्बनाम् आणवीं ध्यानभूमिम् आह

---

तेजसा सूर्यदीपादे-
राकाशे शवलीकृते ।
दृष्टिर्निवेश्या तत्रैव
स्वात्मरूपं प्रकाशते ॥ ७६ ॥

---

पं० ५ ख० पु० चेत्यवृत्तेरिति पाठः ।

दिवसे ऊर्ध्वाधःस्थबाह्यमहाकाशे दिनातपप्रकाशेन कर्बुरीभूते, रात्रौ चन्द्रज्योत्स्नया शबले चन्द्रमण्डलान्तः तद्बाह्ये च महाकाशे, तथा गृहैकदेशस्थदीपमण्डलान्तर्बहिर्व्यापके कोष्ठाकाशे, –तज्ज्वालाप्रकाशेन चित्रे दृष्टिं बद्ध्वा निर्निमेषदृष्टिबन्धनसतत्त्वसंयमात् स्वात्मरूपं–स्वस्वरूपं सर्वं भुवनजातं चिद्घनाकारं ज्ञानदृष्ट्या पश्यति । तथाहि आह भगवान् पतञ्जलिः

'भुवनज्ञानं सूर्ये संयमात्' (पा० ३ सू० २५)
'चन्द्रे ताराव्यूहज्ञानम्' (पा० ३ सू० २६)

इति । तेजश्छुरितत्वं विना केवलनिर्मलाकाशमात्रालम्बनम् । दृष्टिबन्धनं तु अग्रे वक्ष्यति

'आकाशं विमलं पश्यन् कृत्वा दृष्टिं निरन्तराम् ।'

इति । यद्वा सूर्यादिसंयमकालेऽपि स्वस्वरूपचिदाकाशैकीभाव एव स्वात्मरूपप्रकाशनं, तदेव हि मुख्यं फलम् उपादेयतमत्वात्, भुवनादिज्ञानं तु अवान्तरफलं धारणायाः, इत्यलम् ॥ ७६ ॥

---

करङ्किण्या क्रोधनया
भैरव्या लेलिहानया ।
खेचर्या दृष्टिकाले च
परावाप्तिः प्रकाशते ॥ ७७ ॥

---

करङ्किण्या – विगतचेष्टं करङ्कमात्रं शवमिव विश्वं पश्यन्त्या, क्रोधनया – क्रोधव्यग्रया, भैरव्या – दृक्शक्त्या, लेलिहानया – भोक्तुमेकाग्रया, खेचर्या – दूरम् आकाशदर्शनार्थं प्रसृतया मुद्रया

उपलक्षिते दृष्टिसमये परादेवीप्रकाशनम्, श्रीव्योमेशी-वामेश्वरी-इत्यादिशब्दवाच्यायाः निष्कलादेव्याः सात्म्यम् । पाञ्चभौतिकं शरीरं परमाकाशे या विश्रामयति सा करङ्किणी इति ज्ञानसिद्धानां मुद्रा, चतुर्विंशतितत्त्वकं मात्रे वपुषि या क्रोडीकरोति सा क्रोधिनी इति मन्त्रसिद्धानां मुद्रा, स्वस्मिन् या सर्वं संहरते सा भैरवी इति मेलापसिद्धानां मुद्रा, पूर्णत्वेन या सर्वं पुनः पुनः आस्वदते सा लेलिहाना इति शाक्तसिद्धानां मुद्रा, शक्तिव्यापिन्यादिषु खेषु सदा चरति या सा खेचरी इति सा शांभवसिद्धानां मुद्रा । तदुक्तम्

'करङ्किणी क्रोधिनी च भैरवी लेलिहानिका ।
खेचरी चेति मुद्रा याः पञ्चात्मकतया स्थिताः ॥
यो ज्ञानमन्त्रमेलापशाक्तशाम्भवभेदतः ।
क्रमस्तस्य यथा संख्यमेताभिः सर्वथान्वयः ॥'

इति । करङ्को—देहः, करङ्कानुभवात् करङ्किणी । स्वात्माधारसंभवात् क्रोधिनी । स्वरूपसंहरणात् भैरवी । वासनात्मकपुर्यष्टकविलापनात् लेलिहाना । निरावरणत्वेन बोधगगनस्वरूपप्रतिष्ठानात् खेचरी ।

'इयं सा परमा मुद्रा ह्यापातालाच्छिवावधि ।
तर्पयित्वा जगत्सर्वं निजसंस्थानतः स्थिता ॥'

इति । निष्क्रियानन्दनाथस्तु कराङ्किण्या इति पठति—यथा

'करास्त्रयोदशाकाराः सर्वाक्षक्षोभवृत्तयः ।
अङ्कं तु निर्निकेतायाः संविदो देहविस्तरः ॥
एतत्कराङ्कमाख्यातं तस्य ग्रासादनावृतम् ।
निष्करङ्कं समुद्दिष्टं निरालम्बं परं वरम् ॥'

इति। एतद्विस्तरस्तु यथा—प्रथमनभःसमुद्रात् महाकौलात् अकुलरूपिणी या शक्तिलहरी परेण रूपेण गदिता, सैव सूक्ष्मेण रूपेण अकुलात् कुलपञ्चकरूपतया क्रमेण आश्यानतां प्राप्ता सती एकैव श्रीव्योमेश्वरी, निष्कलापि सकलस्वरूपेण रमणशीला त्रिजगति वृन्दचक्रपर्यन्ते सदैव आद्या सर्वकालं स्फुरति, स्फार्यमाणापि एकैव स्थिता, सैव ईषद्विकस्वरत्वेन परमनभःसमुद्रात् मयूराण्डरसवत् खेचर्यादिचतुष्टयं गर्भीकृत्य प्रथमतरस्पन्दरूपा लहरी श्रीवामेश्वरी प्रसृता, इयमेव आदिकोटिः, दिव्यौघचक्रपञ्चकस्फारिणी वृन्दचक्रनायिका श्रीवामेश्येव सर्वं सर्वात्मकम्—इतिन्यायात् वृन्दचक्रे पञ्चधा पातनिकाक्रमेण शाम्भव-शाक्त-मेलाप-मन्त्र-ज्ञानभेदात्मकेन श्रीवामेशी-खेचरी-भूचरी-संहारिणी-रौद्र्यधिष्ठितेन चतुःषष्टियोगिनीरूपा। ताश्चतुःषष्टियोगिन्योऽभेदेन यत्र वर्तन्ते सा रौद्रेश्वरीभूमिगता पञ्चषष्टितमा सर्वमङ्गलमङ्गला राज्ञी भगवती, सैव परधाराधिरूढा सामरस्यभूः। तद्यथा—आदिवर्णस्वराः षोडशस्वरत्वेन ज्ञानसिद्धाः, कादि-मकारपर्यन्तं व्यञ्जनपञ्चविंशकं मन्त्रसिद्धाः, द्वादशधा स्वरव्यञ्जनमिश्रिता मात्राः प्रणवकला वा मेलापसिद्धाः, यकारादि हकारपर्यन्तम् अष्ट शाक्तसिद्धाः, आदिवर्णस्य रौद्र्यन्ताः कलाः चतस्रः शांभवसिद्धाः। ता इत्थं कथिता रहस्यशास्त्रे

---

पं० १ क० पु० परमनभः इति पाठः।

पं० ५ क० पु० स्थीयमाना इति पाठः।

पं० ८ क० पु० पञ्चके स्फारिणीति पाठः।

पं० १२ क० पु० योगिनीभेदेनेति पाठः।

पं० १४ क० पु० वर्णे स्वर इति पाठः।

पं० १७ क० पु० शाक्ताः सिद्धा इति पाठः।

'आदौ यस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधे स्थिता ॥'

इत्यादिना । आदिवर्णः चतुःषष्टिधात्वेन ज्ञानमन्त्रमेलापशाक्तशांभवसिद्धानां वाच्यानां वाचकत्वेन अन्तः परामर्शयति । इत्थं वृन्दचक्रं वर्णक्रमेण प्रतिपादितम् । संवित्क्रमस्तु श्रीवामेश्या अक्रमेण प्रत्यावृत्त्या

'ज्ञानं खकौलार्णवमूर्मिरूपं
स्वबोधविश्रान्तिविमर्शमन्त्रः ।
मेलापसिद्धाः स्वविमर्शशून्यं
शाक्तं महासंहृति शांभवं खम् ॥'

इति सिद्धयोगिनीसंप्रदाययुक्त्युपदेशः । वृन्दचक्रनिर्णयस्तु बहुधा भट्टारककृतप्राकृतत्रिंशकाविवरणे विचार्यः इत्यलम् ॥ ७७ ॥

---

मृद्वासने स्फिजैकेन
हस्तपादौ निराश्रयम् ।
निधाय तत्प्रसङ्गेन
परा पूर्णा मतिर्भवेत् ॥ ७८ ॥

---

कोमले चैलाद्यासने स्थितस्य एककटीप्रोथेन उपलक्षितस्य, निराधारं यथा भवति तथा हस्तपादौ च कृत्वा तादृगासनप्रकृष्टतरस्थित्या सर्वाङ्गेषु प्रत्यंशं साकल्येन चेतयन्ती, विगलिततमोरजस्का सात्त्विकी मतिर्भवेत् । इयम् आणवी भूः ॥ ७८ ॥

---

पं० ३ ख० पु० आदिवर्णचतुः इति पाठः ।

उपविश्यासने सम्यक्
बाहू कृत्वार्धकुञ्चितौ ।
कक्षव्योम्नि मनः कुर्वन्
शममायाति तल्लयात् ॥ ७९ ॥

---

अर्धकुञ्चितौ — सामिकुञ्चितौ । कक्षव्योम्नि — उभयकक्ष्याकाशे ॥ ७९ ॥

भैरवीं भूमिम् आह

---

स्थूलरूपस्य भावस्य
स्तब्धां दृष्टिं निपात्य च ।
अचिरेण निराधारं
मनः कृत्वा शिवं व्रजेत् ॥ ८० ॥

---

स्थूलरूपस्य — घटदेहादेः, स्तब्धां — निरुन्मेषनिमेषां, दृष्टिं निपात्य, च-शब्दात् अन्तर्लक्ष्यां च कृत्वा, निराधारं—परिहृतविकल्पं यथा भवति तथा कृत्वा ॥ ८० ॥

---

मध्यजिह्वे स्फारितास्ये
मध्ये निक्षिप्य चेतनाम् ।

---

पं० २ ख० पु० अवकुञ्चितौ इति पाठः ।

होच्चारं मनसा कुर्व-
स्ततः शान्ते प्रलीयते ॥ ८१ ॥

---

मध्ये—अन्तराले एव, जिह्वा यस्य, ईदृशे विस्फारिते आस्ये सति, संकुचितमुखमध्ये बुद्धिं निक्षिप्य, होच्चारं—अनच्कहकारमात्रोच्चारं, मनसैव कुर्वन् शान्तो भवेत् । उच्छ्वासे हं, निःश्वासे सः ।

'सकारेण बहिर्याति हकारेण विशेत्पुनः ।'

इति उक्तनीत्या अस्यां खेचरीमुद्रायां सकारस्य बहिर्निगमनाभावात् 'होच्चारम्' इति उक्तम् । अत्र भ्रूमध्ये दृष्टिबन्धनं कृत्वापि इति शेषः । यदुक्तं विवेकमार्तण्डे

'कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥'

इति । भगवान् कृष्णद्वैपायनोऽपि आह

'स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥'

इत्यादि ॥ ८१ ॥

---

आसने शयने स्थित्वा
निराधारं विभावयन् ।
स्वदेहं मनसि क्षीणे
क्षणात् क्षीणाशयो भवेत् ॥ ८२ ॥

---

अजिन-कौशेय-चक्रालात-तूलपटी-मखमल्लशीतलपट्टमयोपधानास्तरणशय्योत्तरच्छदसंवलनसमकालमेव आनन्दमयदशोद्भूतौ चित्ते क्षीणे सति स्वदेहमपि निराधारं विभावयन्, स्वदेहावमर्शस्यापि गलनात् आस्तरणाद्याश्रयरहितमेव स्ववपुर्विमृशन्, सद्य एव क्षीणाशयो – निर्वासनो भवेत् इत्यर्थः ॥ ८२ ॥

---

चलासने स्थितस्याथ
शनैर्वा देहचालनात् ।
प्रशान्ते मानसे भावे
देवि दिव्यौघमाप्नुयात् ॥ ८३ ॥

---

अतिचञ्चले गन्त्रीगजतुरगादियानासने उपविष्टस्य तद्यानादिकृतदेहचलत्तया, यद्वा स्वयमेव शनैः देहचालनेन मनसः सत्तायां प्रशान्तायां परमाकाशचिदानन्दप्रवाहाप्तिः ॥ ८३ ॥

---

आकाशं विमलं पश्यन्
कृत्वा दृष्टिं निरन्तराम् ।
स्तब्धात्मा तत्क्षणाद्देवि
भैरवं वपुराप्नुयात् ॥ ८४ ॥

---

निरन्तरां – व्यवधानरहितां उन्मेषनिमेषाभावात् । स्तब्धात्मा – निश्चलदेहः । शेषं निगदव्याख्यातम् ॥ ८४ ॥

---

पं० १ क० पु० शक्रालातेति पाठः ।

लीनं मूर्ध्नि वियत्सर्वं
भैरवत्वेन भावयेत् ।
तत्सर्वं भैरवाकार-
तेजस्तत्त्वं समाविशेत् ॥ ८५ ॥

---

'लीनं गमयतीत्युक्तेर्लिङ्गनिर्वचनं यतः ।
हृदये ब्रह्मरन्ध्रे च वियल्लीनं परे पदे ॥
तदप्यन्तःकृताशेषसृष्टभावसुनिर्भरम् ।
भेदभावकमायीयतेजोंशग्रसनाच्च तत् ॥
सर्वसंहारकत्वेन कृष्णं तिमिररूपधृत् ।'

इति मालिनीवार्तिकनीत्या सर्वं जगत् मूर्ध्नि मुख्यभूते हृदयब्रह्मरन्ध्राख्ये, वियत्–आकाशरूपं तिमिररूपं वा, अन्तःकृतसर्वभावपरिपूर्णं, सर्वसंहारकत्वात् कालरूपं च आकाशमयमेव चिन्तयेत्, तदनु तस्य सर्वस्य भैरवाकृतिपरप्रकाशतत्त्वसमावेशः । सर्वस्य उक्तलक्षणकृष्णरूपत्वचिन्तनेन परप्रकाशात्मता अद्भुतं फलम् । तेजस्तत्त्वं – चित्प्रकाशरूपं समाविशेत् अर्थात् योगी इति । एषा प्रागुक्तशून्यभावनाविकल्पना आणवी भूः ॥ ८५ ॥

---

किंचिज्ज्ञातं द्वैतदायि
बाह्यालोकस्तमः पुनः ।

पं० ६ ख० पु० लीने परे इति पाठः ।

पं० ७ क० पु० स्पष्टभावेति पाठः ।

पं० १४ क० पु० अत्यद्भुतफलम् इति पाठः ।

विश्वादि भैरवं रूपं
ज्ञात्वानन्तप्रकाशभृत् ॥ ८६ ॥

---

किंचिन्मात्रं घटकुड्यादिकं ज्ञानविषयीकृतं भेदप्रथाप्रदं जाग्रदवस्थागोचरम्, तथा बाह्यानां पदार्थानां जाग्रत्संस्कारजातानाम् आलोकः—प्रकाशः स्वप्नावस्थाविषयः, पुनः—भूयः, तमः—अज्ञानभोगः सुप्तिस्थः, तथा एतदवस्थात्रयाभिमानि चैतन्यं विश्वादि, आदिशब्देन तैजसप्राज्ञादीनां ग्रहणम्। अत्र इयं वेदान्तशास्त्रप्रक्रिया—मायाविद्यात्मकद्विप्रकारा गुणत्रयसाम्यावस्था प्रकृतिः, विशुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना अविद्या, मायाप्रतिबिम्बितश्चिदात्मा अहम् इदं सर्वं जानामि करोमि च इति सर्वज्ञत्वादिगुणाश्रय ईश्वरः, स च एकः,—अहं कर्ता, अहं भोक्ता इत्यादि-अविद्याप्रतिबिम्बितः चिदात्मा, तत्परतन्त्रो जीवः, स तु देवतिर्यगादिभेदेन अनेकः। आतिवाहिकाख्यलिङ्गशरीरविषयाहमभिमानिनो जीवाः, सुखी अहं, दुःखी अहं, क्षुधितोऽहं, तृषितोऽहम्—इत्यादीन् अन्तःकरणधर्मान् स्वात्मनि अध्यस्यन्तः तैजससंज्ञकाः। कारणशरीरशब्दवाच्याया अविद्यायाः पृथक् पृथक् अहमभिमानिनो जीवाः प्राज्ञाः इत्युच्यन्ते। एकैकस्थूलशरीरगोचरस्थूलकृशत्वाद्यहमभिमानवतां तैजसानामेव विश्वसंज्ञा। उक्तलक्षणमायोपाधिकः परमेश्वरः सकलसूक्ष्मशरीराविषयाहमभिमानेन हिरण्यगर्भसंज्ञः। अस्यैव सकलस्थूलशरीराहमभिमानेन वैश्वानरसंज्ञा। प्राज्ञानां तु अविद्याविषयाहमभिमानेन सुषुप्तौ भोगः, अविद्यायाः तत उत्थाय, मूढोऽहम् आसम्, माम् अहं न जानामि इत्यादिप्रत्यवमर्शः। परमेश्वरस्य पुनरेतेषां सर्वेषां प्राज्ञानाम् अह-

मेव कर्ता इति तदध्यासेन अविद्याभिमानो, न तु साक्षात् – सर्वज्ञत्वादिधर्मकत्वात् । ईश्वरस्यापि प्रलयकाले योगनिद्राप्रसक्तिदशायां स्वान्तःकृता अविद्या वासनारूपेण स्थितैव, अन्यथा कूटस्थदशायाः सकाशात् कर्तृत्वाद्यभिमानात्मिकाविद्यानिःसरणेन जीवदशाप्रादुर्भावः कथङ्कारं भवेत् । एतत् सर्वं – विश्वतैजसादिप्रपञ्चजातं भैरवरूपं तुरीयस्वरूपं ज्ञात्वा अनन्तप्रकाशरूपो भवेत् ।

'सर्वं खल्विदं ब्रह्म ।'

इति श्रुतिरेतच्छ्लोकार्थेऽनुकूला ॥ ८६ ॥

एवम् अद्भुतरूपतैमिरीधारणाप्रस्तावेन बाह्यां तिमिरधारणाम् आह

---

एवमेव दुर्निशायां
कृष्णपक्षागमे चिरम् ।
तैमिरं भावयन् रूपं
भैरवं रूपमेष्यति ॥ ८७ ॥

---

एवमेव इति पूर्वोक्ततिमिरवत् । दुर्निशायां मेघच्छन्ननिशायां । एष्यति प्राप्स्यति । इयम् अक्ष्णोरुन्मीलनेन तिमिरभावना उक्ता ॥ ८७ ॥

निमीलनेन भावनाम् आह

---

एवमेव निमील्यादौ
नेत्रे कृष्णाभमग्रतः ।

प्रसार्य भैरवं रूपं
भावयंस्तन्मयो भवेत् ॥ ८८ ॥

एवमेव कृष्णपक्षदुर्निशाद्यभावेऽपि, 'आदौ नेत्रे निमील्य, कृष्णाभं तमोरूपं भैरवं भावयन्, पश्चादपि नेत्रे प्रसार्य कृष्णाभं भैरवरूपं भावयन् प्रकाशमयो भवेत् ॥ ८८ ॥

अन्तर्मुखाविकल्पोपायां शाम्भवीं भूमिम् आह

यस्य कस्येन्द्रियस्यापि
व्याघाताच्च निरोधतः ।
प्रविष्टस्याद्वये शून्ये
तत्रैवात्मा प्रकाशते ॥ ८९ ॥

व्याघातात् बाह्याभिभावककृतात्, निरोधात् तु स्वरसोत्थात् प्रायत्निकात् वा, समनन्तरमेव अद्वये शून्ये प्रविष्टस्य–अन्तर्मुखपदे निरूढस्य, तत्रैव परं चैतन्यं प्रकाशते ॥ ८९ ॥

अबिन्दुमविसर्गं च
अकारं जपतो महान् ।
उदेति देवि सहसा
ज्ञानौघः परमेश्वरः ॥ ९० ॥

पं० ७ क० ख० कर्मेन्द्रियस्येति पाठः ।

बिन्दुः अविभागसंवेदनम् – अद्वैतज्ञानम् , विसर्गो भेदप्रथासर्जनक्रिया – ब्राह्म्यादिशक्तिरूप-ककाराद्यक्षरसृष्टिरूपः; तद्रहितम् अकारं प्रथमाक्षरम्, अविद्यमानः कारः करणं यस्य तत्, एवं-विधम् अकिंचिच्चिन्तनात्मकम् अनुत्तरं विमृशतः, तत्क्षणमेव अनेकज्ञानप्रसरस्रष्टा परमेश्वरः प्रादुर्भवति । अत्र

'एकमेवाद्वितीयं ब्रह्म ।'
'सर्वं खल्विदं ब्रह्म ।'

इति एकत्वं द्वितीयत्वं च अनुत्तरे अवाङ्मनसगोचरे न योग्यं, निरुत्तरत्वेन किंचिन्मात्रपरामर्शस्यापि अभावात्, अनुत्तरपदस्थस्य

'अवचनेनैव प्रोवाच स ह तूष्णीं बभूव ।'

इति श्रुत्यर्थ एतदनुकूलः । अविसर्गं च अकारं च इत्यत्र

'एकधर्मिणो वा सवर्णे प्रकृतिः ।'

इति परिभाषया संधेरभावः ।

'धिक्तां च तं च मदनं च इमां च मां च ।'
'माता यस्य उमा देवी ।'

इत्यादिवत् । इमां नैरुत्तरीं दशां संचेत्य श्रीभगवत्पादैरपि सिद्धान्तितम् ।

'न चैकं तदन्यद् द्वितीयं कुतः स्यात्
न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥'

इति । अम्–इति उच्चाररहितं, अः–इति उच्चारहीनं च अकारमात्रं

कुम्भकस्थस्य जपतः इति केचित् । द्वयसंपत्तिकारस्तु वामननाथो विवृत्यन्तरम् आह, यथा—

'अहङ्कारमयी भूमिर्बुद्धिभूमेः परा हि सा ।
तया व्याप्तमिदं विश्वं ज्ञाता सैव विमुक्तिदा ॥
संविद्रूपा परा शक्तिरभिन्ना परमेश्वरात् ।
ज्ञानशक्तिः पुनः सैव मन्त्ररूपा प्रदर्श्यते ॥
अहंकारः स्मृतो मन्त्रः शिवशक्त्यात्मरूपकः ।'

अयम् अहंकारः अपरिमिताहंभूमिः, पूर्णाहन्ता इत्यर्थः ।

'यदत्राद्यमवर्णाख्यं स शिवः परमेश्वरः ॥
नादबिन्द्वात्मकं यच्च सा शक्तिरैश्वरी स्मृता ।
द्वयमेतत्समाख्यातं बीजभूतं चराचरे ॥
अजूझलाद्याश्च ये वर्णास्तेऽनेनैव हि मुद्रिताः ।
शब्दब्रह्मेति तत्प्राहुर्योगिनस्तत्त्वचिन्तकाः ॥
अप्राणमस्वरं ध्यात्वा पश्यन्त्या निर्विभागया ।
चिन्मात्रामर्शयोगेन निलीनः स्यात्परे पदे ॥
तथाहि सिद्धैरादिष्टं क्वचित्सिद्धान्तसंग्रहे ।
नाभेरूर्ध्वं वितस्तिस्तु कण्ठाधस्तात्षडङ्गुलम् ॥
हृदयं मध्यदेशे तु हृन्मध्ये कमलं स्मृतम् ।
पद्ममध्ये स्थिता सूक्ष्मा कर्णिका त्रिपथोपगा ॥
तन्मध्ये संस्थितो ह्यात्मा ह्यकारादिस्वरूपधृत् ।
अकारान्तः परं सूक्ष्मं चिन्मात्रस्पन्दलक्षणम् ॥
तस्याप्युपासा विज्ञानभैरवे कथिता यथा ।
'अबिन्दुमविसर्गं च························ ॥'

---

पं० २० क० पु० ह्याकारेति पाठः ।

इत्यादि ।

'आत्मस्थाने निराधारा द्वितीया शक्तिरैश्वरी ।
बीजभूता कुण्डलिनी सार्धत्रिवलयात्मिका ॥
प्राणशक्तिरियं देहे हकाराख्या नदत्यलम् ।
कर्णान्तर्विवरे योगी स्थगित्वा लक्षयेत्स्फुटम् ॥
बिन्दुरूपा भ्रुवोर्मध्ये संसारजननी शिवा ।
लक्ष्यते योगिभिर्नित्यं भ्राजमाना स्वतेजसा ॥
तस्य बिन्दोस्तु चन्द्रार्कौ वामदक्षिणनेत्रयोः ।
निराश्रयौ तु तौ कृत्वा विशेद्ब्रह्म सनातनम् ॥'

इति ॥ ९० ॥

---

वर्णस्य सविसर्गस्य
विसर्गान्तं चितिं कुरु ।
निराधारेण चित्तेन
स्पृशेद्ब्रह्म सनातनम् ॥ ९१ ॥

---

निराधारेण प्रक्षीणवेद्येन, विविधसर्गस्वभावयुक्तस्य वर्णजातेः ककाराद्यक्षररूपस्य ब्राह्म्यादिशक्तिसमूहस्य पशुभावोपकरणस्य विसर्गस्य अन्तो यथा भवति तथा, अन्तर्मुखस्वस्वभावविमर्शनाधिक्यात् तत्समावेशेन तन्मयीभावापादनस्वरूपतया, चितिं कुरु बुद्धिं विधेहि, ततः संवेदनस्य निराश्रयत्वे सति परब्रह्मस्पर्शो नित्यः ।

---

पं० ५ क० ख० पु० कर्णान्तविवरे इति पाठः ।

पं० ११ क० पु० सवर्णस्य विसर्गस्येति पाठः ।

पं० १५ ग० पु० स्वभावस्येति पाठः ।

अथ च

'विसर्गस्यैव विश्लेष इति सप्तदशी कला ।
क्वचिदष्टादशी सैव पुनः प्रक्षोभयोगतः ॥
अनुत्तरस्याकारस्य परभैरवरूपिणः ।
अकुलस्य परा येयं कौलिकी शक्तिरुत्तमा ॥
स एवायं विसर्गस्तु तस्माज्जातमिदं जगत् ।
तस्य प्रक्षोभयोग्यत्वं प्रक्षोभकलनोदयः ॥
प्रक्षोभपूर्णताभावादक्रमस्य क्रमोनता ।
इति षट्कस्वरूपात्मविसर्गान्दोलनोदितम् ॥
अनुत्तरस्वभावत्वादाद्यस्यैव विजृम्भितम् ।
स एव भगवानन्तर्नित्यं प्रस्फुरदात्मकः ॥
अन्तःस्थसर्वभावौघपूर्णमध्यमशक्तिकः ।'

इति उक्तनीत्या विसर्गस्वरूपे चितिं कुरु । सप्तमीपाठेन अयम् अर्थः—सर्वोऽयं मातृकाप्रपञ्चोऽकुलस्य शिवबिन्दुनामधेयस्य शक्तिरूपो विसर्गः इत्यर्थः ।

'विसर्गः कौलिकी शक्तिस्तज्जोऽयं मातृकोदयः ।'

इति उक्तत्वात् । ज्ञानामृतरसायने च

'मात्रार्धमात्रात्परमं तदर्धाच्च परं परम् ।
तत्त्वातीतं परं तत्त्वमभावं भावमाश्रितम् ॥

तथा

'अत्र प्रकाशमात्रं यत्स्थितं धामत्रये सति ।
उक्तं बिन्दुतया शास्त्रे शिवबिन्दुरिति स्मृतः ॥

---

पं० ५ ग० पु० अमलस्येति पाठः ।
पं० २१ क० ख० पु० स्थितमिति पाठः ।

अनुत्तरं परं धाम तदेवाकुलमुच्यते ।
विसर्गस्तस्य नाथस्य कौलिकी शक्तिरुच्यते ॥'

तस्या एव आदिक्षान्तोत्पत्तिः इति ॥ ९१ ॥

---

व्योमाकारं स्वमात्मानं
ध्यायेद्दिग्भिरनावृतम् ।
निराश्रया चितिः शक्तिः
स्वरूपं दर्शयेत्तदा ॥ ९२ ॥

---

दिग्भिः अनावृतं विश्वव्यापिनम् । व्योमाकारम् इति अनाकृतिं, न तु तुच्छम् ॥ ९२ ॥

---

किञ्चिदङ्गं विभिद्यादौ
तीक्ष्णसूच्यादिना ततः ।
तत्रैव चेतनां युक्त्वा
भैरवे निर्मला गतिः ॥ ९३ ॥

---

किञ्चिदङ्गम् अङ्गुल्यङ्गुष्ठादिकं, निशितसूचीकण्टकादिना प्रथमं छित्त्वा, तदनन्तरं तत्रैव चेतनां संविदं युक्त्वा संयोज्य, सूच्यादिव्यथानुभवितृचेतनाशक्तिसमाहितस्य भैरवविषयं निर्मलं ज्ञानं भवत्येव ॥ ९३ ॥

---

पं० १४ ग० पु० अङ्गुल्यादिकमिति पाठः ।

चित्ताद्यन्तःकृतिर्नास्ति
ममान्तर्भावयेदिति ।
विकल्पानामभावेन
विकल्पैरुज्झितो भवेत् ॥९४॥

---

चित्तादिकम् अन्तःकरणं नास्ति मद्देहान्तर् इति भावयेत् इति संबन्धः ॥ ९४ ॥

गुणा गुणेषु वर्तन्ते, मम किम् आयातम् इति स्वात्मनि औदासीन्यधारणाम् आह

---

माया विमोहिनी नाम
कलायाः कलनं स्थितम् ।
इत्यादिधर्मं तत्त्वानां
कलयन्न पृथग्भवेत् ॥ ९५ ॥

---

विशेषेण भेदप्रथात्मकेन पुरुषं मोहयति इति मायाया एव मोहनत्वं धर्मो, न मम, कलायाः कलातत्त्वस्य किंचित्करणं धर्मः, विद्यातत्त्वस्य किंचित् वेदनं धर्मः इत्यादि सर्वेषां तत्त्वानां धर्मं विमृशन् पुरुषः पृथक् न भवेत्, किं तु विवेकज्ञानात्मकाभेद-

पं० १२ ग० पु० कलयेन्न पृथगिति पाठः ।

पं० १६ क० ख० पु० अपृथक् भवेत् न पृथग्भवेदिति पाठः ।

पं० १६ क० पु० आत्मकभेदेति पाठः ।

ख्यातिमान् भवेत् । प्रकृतिपुरुषविवेकज्ञानात् मोक्षः इति निर्वाहितम् ॥ ९५ ॥

---

झगितीच्छां समुत्पन्ना-
मवलोक्य शमं नयेत् ।
यत एव समुद्भूता
ततस्तत्रैव लीयते ॥ ९६ ॥

---

अवलोक्य अन्तर्मुखत्वेन विमृश्य, इच्छां पुत्राद्येषणाम् इदं मे स्यात् इत्येवं-प्रकाराम् एषणां समुत्पन्नाम् – अमूर्तादपि चिन्मात्रात् मायाकृतक्षोभवशात् उद्भूतां दृष्ट्वा, शीघ्रं शान्ति प्रापयेत् । अमूर्तो हि चिन्मात्रात्मा मध्येऽज्ञानेनैव प्रकटितेच्छः, चिन्मात्रस्य निराकारत्वात् नास्ति इच्छा, परंतु इष्यमाणम् एषणादिकं वा अविद्यैव इति दृष्ट्या शान्तेच्छो भवेत् । यतो यस्मात् अविद्ययैव उद्भूता इच्छा, अविद्या हि आकाशात्मिका, ततस्तत्रैव लीना भवेत्, तेन हि निर्विकल्पदशाप्राप्तिः । इच्छायाः शान्तिनयनासंभवे तु पूर्वपदार्थेच्छानन्तरम् इष्यमाणविषयं चिन्तान्तरं भवेदेव इति चेत्, तर्हि

'एकचिन्ताप्रसक्तस्य'। ( स्प० ३ उ० ९. का० )

इति-नयेन उन्मेषधारणाभ्यासेन इष्यमाणविषयद्वयम् उपशान्तमेव स्यात् । तस्मात् विषयद्वयचिन्ताद्वयान्ते व्यापकतया अनुभूयमानमुन्मेषमेव ध्यायेत् । तेन उन्मेषात् उद्भूता एका चिन्ता,

तस्मिन्नेव अन्यापि लीयते, इति चिन्ताद्वयैकानुसंधातृधारणा-बलात् द्वयमपि क्षीयते । यदभिप्रायेण

'न चित्तं निक्षिपेत् दुःखे............ ।'

इति ।

'यत्र यत्र मनो याति तत्तत्तेनैव तत्क्षणम् ।
परित्यज्य.................................... ॥'

इत्यादि उपदेक्ष्यति अग्रे, तत् साधु उक्तं–'यत एव समुद्भूता ततस्तत्रैव लीयते ।' इति । तेन यत उन्मेषरूपात् स्पन्दभट्टारकात् उद्भूता, ततः तस्मिन्नेव लीयते । यदुक्तं वसुगुप्तपादैः

'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥'
(स्प० ३ उ० ९ का०)

इति ॥ ९६ ॥

---

यदा ममेच्छा नोत्पन्ना
ज्ञानं वा कस्तदास्मि वै ।
तत्त्वतोऽहं तथा भूत-
स्तल्लीनस्तन्मना भवेत् ॥९७॥

---

ज्ञानम् इति क्रियाया उपलक्षणम्, इच्छाज्ञानक्रियाणाम् अनाविर्भावे अहमेव नास्मि, किं तु चिदानन्दरूप एव अस्मि इत्यर्थः । चिन्निर्वृतीच्छाज्ञानक्रिया हि आत्मनः शक्तयो वस्तुतः सर्वासु

दशासु, न पुनः तस्मिन्नेव समये, तथाभूतः चिदानन्दात्मकः ॥ ९७ ॥

---

इच्छायामथवा ज्ञाने
जाते चित्तं निवेशयेत् ।
आत्मबुद्ध्यानन्यचेता-
स्ततस्तत्त्वार्थदर्शनम् ॥ ९८ ॥

---

इच्छायां जातमात्रायाम्, अथवा ज्ञाने जाते सति, विषयसंकल्पं विहाय, आत्मैव एतत् इति बुद्ध्या चित्तं निक्षिपेत्, तेनैव परमार्थज्ञानं भवेत् ।

'अयम् आत्मा ब्रह्म' ।

इति श्रुतेः । सालम्बापरपर्यायसाकारभावना इयम् ॥ ९८ ॥

ज्ञानमेव क्षणिकं सन्तानस्वरूपं, न तु तस्य कश्चित् ज्ञाता आधारः इति सौगतदर्शनं कटाक्षयन्, उपदिशति शाक्तोपायम्

---

निर्निमित्तं भवेज्ज्ञानं
निराधारं भ्रमात्मकम् ।
तत्त्वतः कस्यचिन्नैत-
देवंभावी शिवः प्रिये ॥९९॥

---

पं० ८ ग० पु० आत्मनैव इति पाठः ।

पं० १२ क० ख० पु० कस्यचिदिति पाठः ।

पं० १७ ख० पु० एवं भावे इति पाठः ।

यत् इदं घटादिज्ञानं तत् निराश्रयं,– स्थिरस्य कस्यचित् आत्मनो घटादेराधारस्य वा अवास्तवत्वात्, अत एव निर्हेतुकं– चक्षुरालोकादिनिमित्तस्यापि अवास्तवत्वात्, भ्रमात्मकं मायावशोत्थितं विकल्पात्मकत्वात्– ज्ञानव्यतिरिक्तस्य अन्यस्य अभावात् । स एव अयं घटः इति संवेदनं तु सोऽयं–वितस्तायाः प्रवाहः इतिवत् भ्रान्तिरेव इत्यर्थः । एवं-भावनापरः शिवः एव ॥ ९९ ॥

---

चिद्धर्मा सर्वदेहेषु
विशेषो नास्ति कुत्रचित् ।
अतश्च तन्मयं सर्वं
भावयन्भवजिज्जनः ॥ १०० ॥

---

चित् ज्ञानं, क्रिया वा धर्मो गुणो यस्य सः चिद्धर्मा– चेतनः

'धर्मादनिच् केवलात्'। (पा० व्या० ५–४–१२४)

इति अनिच् । सर्वदेहेषु हस्तिपिपीलिकादिशरीरेषु, कीटादिसदाशिवान्तं नास्ति कश्चिद्भेदः । तन्मयं– चिन्मयं चैतन्यस्य साधारणत्वात् । यदुक्तं ब्रह्मदर्शने

'यैव चिद्गगनाभोगभूषणे व्योम्नि भास्करे ।
धराविवरकोशस्थे सैव चित्कीटकोदरे ॥'

इति । भावयन् इति निर्विशेषं ब्रह्म सर्वत्र अस्ति इति बोधमेवं

---

पं० १७ ग० पु० भोगदर्शने इति पाठः ।

धारयन्, न तु श्वश्वपाकादिना सह उपवेशनभोजनादिकं व्यापारम् आचरन् इति ज्ञानप्रकर्ष एव उक्तः, अन्यथा

'बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥'

इति ॥ १०० ॥

इदानीम् अतिशयितकामक्रोधाद्यवस्थासु स्वरसत एव समस्तापरवृत्तिक्षयमया यदि स्पन्दतत्त्वविविक्तये समद्युक्ता झगिति अन्तर्मुखीभवन्ति योगिनः, तत् समीहितम् अचिरेणैव लभन्ते । अयोगिनस्तु अत्र मूढा एव, तस्मात् एतद्वृत्तिक्षयपदं संचेत्य झगिति कूर्माङ्गसंकोचयुक्त्या क्रोधसंशयवृत्तीः प्रशमय्य महाविकासव्याप्तियुक्त्या प्रहर्षधावनवृत्तीर्विस्फार्य अभिमुखीभूतनिजस्पन्दशक्तिविमर्शवता योगिना भाव्यम् इति उपदिशति

---

कामक्रोधलोभमोह-
मदमात्सर्यगोचरे ।
बुद्धिं निस्तिमितां कृत्वा
तत्तत्त्वमवशिष्यते ॥ १०१ ॥

---

कामादिरूपे गोचरे तदास्पदे अरिषड्वर्गे, अवतरणुक्तनीत्या एकाग्रां बुद्धिं स्वसंविदं विधाय तत् तत्त्वम् अवशिष्यते । कामादिविषये तदैकाग्र्यप्रकर्षात् अपहारितबाह्यविषयाश्लेषं चिदानन्दम-

---

पं० ६ ख० पु० समस्तापरिवृत्ति इति पाठः ।

पं० १७ क० पु० अवतारणीति । ग० पु० उक्तरीत्या इति पाठः ।

यत्वमेव जायते इति वृत्त्यन्तरम् । एषा निर्विकल्पौपयिकी शांभवी भूः ॥ १०१ ॥

---

इन्द्रजालमयं विश्वं
व्यस्तं वा चित्रकर्मवत् ।
भ्रमद्वा ध्यायतः सर्वं
पश्यतश्च सुखोद्गमः ॥ १०२ ॥

---

विश्वं ग्राह्यग्राहकात्मकं जगत् । भ्रमत् इति नावारूढस्य गच्छत्तरुपर्वतवत् जन्मादि ॥ १०२ ॥

---

न चित्तं निक्षिपेद्दुःखे
न सुखे वा परिक्षिपेत् ।
भैरवि ज्ञायतां मध्ये
किं तत्त्वमवशिष्यते ॥१०३॥

---

सुखदुःखयोः विषये चित्तस्थापनं न विधेयम्—अहं सुखी अहं दुःखी इति । शुद्धे स्वात्मनि अन्तःकरणधर्मान् सुखदुःखादीन् अध्यस्य न स्थेयं, किं तु ज्ञायतां त्वया—स्वयमेव विचारय मध्ये किं तत्त्वम् अवशिष्यते इति । सुखदुःखयोः मध्ये यत् तत्त्वं

---

पं० १ क० ख० पु० औपायिकेति पाठः ।

पं० ५ ग० पु० भ्रमादिति पाठः ।

तत्साक्षिभूतं तदनुसंधातृ एकं चित्तत्त्वम्, ऐकाग्र्येण तदेव विमृश इत्यर्थः ॥ १०३ ॥

इदानीं पूर्णाहन्ताग्रहणेन देहाद्यहन्ताहानेन चिदानन्दव्याप्तिम् उपदिशति

---

विहाय निजदेहास्थां
सर्वत्रास्मीति भावयन् ।
दृढेन मनसा दृष्ट्या
नान्येक्षिण्या सुखी भवेत् ॥ १०४ ॥

---

निजदेहे आस्थां—स्वदेहे प्रमातृतां विहाय सर्वमहम् इति सदाशिवेश्वरवत् न तु

'चिद्धर्मा.................. ।'

इति उक्तचिन्मात्रात्मशिववत्, दृढेन—निःसंशयेन, मनसा चित्तेन, तथा दृष्ट्या स्वसंविदा, नान्येक्षिण्या प्रोक्तवस्तुविमर्शैकाग्रतया, भावयन्, सुखी भवेत् । अत्र शिवशक्तिसामरस्यात्मनि विश्वाहंभावे बहुशो व्याचचक्षिरे, ईदृशोऽहंभावोऽपि तत्त्वमञ्जरीकारेण अपह्नुतो, यत् सौगतमतानुमोदनरसिकेन संवादितम्

'यतस्ततो वास्तु भयं यद्यहं नाम किंचन ।
अहमेव न किंचिच्चेद्भयं कस्योपजायते ॥'

---

पं० १ ग० पु० अनुसंधाता अतः इति पाठः ।

पं० ३ ख० पु० आनन्दावाप्तिमिति पाठः ।

पं० १३ क० ख० ऐकाभ्यतया इति पाठः ।

इति । यदाहुः सौगता अपि

' सत्यात्मनि परसंज्ञा
　　स्वपरविभागे च रागविद्वेषौ ।
अनयोः संप्रतिबद्धाः
　　सर्वे दोषाः प्रजायन्ते ॥ '

इति । विमर्शदीपिकायां तु

' विश्वात्म विश्वोत्तीर्णं च स्वतन्त्रं दिव्यमक्षरम् ।
अहमित्युत्तमं तत्त्वं समाविश्य बिभेति कः ॥ '

इति प्रतिपन्नम् । पूर्वगुरुणापि

' एककोऽहमिति संसृतौ जन-
　　श्वाससाहसरसेन खिद्यते ।
एककोऽहमिति कोऽपरोऽस्ति मे
　　इत्थमस्मि गतभीर्व्यवस्थितः ॥ '

इत्यादिना प्रतिग्रन्थं भगवान् अहं-रूप एव परामृष्टः । श्रीह्रस्व-नाथेन हर्षदत्तसूनुनापि

' अहंकारमयी भूमिः.................... । '

इत्यादिना अद्वयसंपत्तौ । परिमिताहंभावस्तु परिहरणीयः । तदुक्तं तपस्विराजेन

' सुविषममतादंष्ट्रा-
　　विदलितजनधैर्यशोणितपिपासुः ।
अहमिति पिशाच एष
　　त्वत्स्मृतिमात्रेण किङ्करीभवति ॥ '

इति ॥ १०४ ॥

घटादौ यच्च विज्ञान-
मिच्छाद्यं वा ममान्तरे ।
नैव सर्वगतं जातं
भावयन्निति सर्वगः ॥१०५॥

सर्वत्र परिदृश्यमानं यत् घटादौ विज्ञानं, यत् च मदन्तरे इच्छादिकं, तत् सर्वं जातमेव न भवति इति शून्यरूपतया भावयन्, सर्वगः स्यात् इति अन्ये ।

अस्मदीयो विवेकस्तु यथा – घटादौ विषये यत् अस्मदादेर्विषयिणो ज्ञानं, इच्छाद्यं वा यत् च अस्ति, तत् ममैव अन्तरे हृदयमध्ये नैव, किं तु सर्वगतं जातं तत् भवति इति अन्वयः । एव-कारो भिन्नक्रमः स तु मम इति अनन्तरं बोद्धव्यः । सर्वेषां घटादीनामपि अस्मदादिविषयं ज्ञानं इच्छाद्यं वा अस्ति तेन किं जातं, घटादयोऽपि जानन्ति अस्मदादिज्ञानेन, तथा सदाशिवादिरपि क्रिमिपर्यन्तं मदात्मना जानाति इच्छति वा, क्रिमिरपि अस्मदादिप्रभृति सदाशिवान्तं जानाति इच्छति च इति ज्ञानक्रियात्मकं सर्वं सर्वात्मकम् इत्थं भावयन् धारणां कुर्वन् सर्वगतो भवेत् । यदुक्तं सोमानन्दपादैः शिवदृष्टौ

'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना ।
सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना ॥
नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः ।'

इति ॥ १०५ ॥

ग्राह्यग्राहकसंवित्तिः
सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽस्ति
संबन्धे सावधानता ॥ १०६ ॥

सर्वदेहिनां सदाशिवादिकीटान्तानां, सामान्या निर्विशेषा । योगिनां तु पुनः सावधानता ग्राहकरूपाविस्मरणम् ॥ १०६ ॥

स्ववदन्यशरीरेऽपि
संवित्तिमनुभावयेत् ।
अपेक्षां स्वशरीरस्य
त्यक्त्वा व्यापी दिनैर्भवेत् ॥१०७॥

स्वकीयशरीरापेक्षां विहाय केवलं संविन्मात्रम् अन्यशरीरेऽपि अन्यदीयबाह्यदेहेऽपि अनुगतं भावयेत् – स्वशरीराविनाकृतं संविद्रूपं बाह्ये परकाये विमृशेत्, येन

'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।'

इत्यादिना विदेहकैवल्यसिद्धिः ।

---

पं० ३ ख० पु० विशेषोऽयमिति पाठः ।

पं० ५ क० ग० पु० कीटान्तानां योगिनां च सामान्या निर्विशेषा सावधानता इति पाठः ।

पं० १२ ख० पु० शरीरविना इति पाठः ।

'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।'

इति सर्वत्र ब्रह्मदर्शनमाहात्म्यात् महाविदेहकैवल्यं सिध्येत् । ततः परकायप्रवेशादिना तत्तन्नानाविधसात्त्विक्यादियोनिविषये तत्तत्कर्माचरणेच्छया विहरणसुखं योगिनो जायते । कथं? स्वदेहानपेक्षं संविद्रूपम् अनुवृत्तं परत्र भावयेत् इति उपमानमाह – स्ववत् इति । यथा स्वात्मनि स्वशरीरापेक्षां त्यक्त्वा स्वसंविद्रूपविमर्शनं भवति, तद्वत् अन्यशरीरे जीवद्भूते मृते वा संविद्रूपानुगतिभावना, इत्यत्र स्वेच्छैव योगिनः प्रमाणं, सजीवे वशिता-यत्रकामावसायितादिसिद्धिप्रादुर्भावफलं, मृतेऽपि कस्मिंश्चिद्राजदेहादौ स्वसंविद्विमर्शनबलात् तत्कायप्रवेशेन तत्तत्क्रीडाविधानमेव प्रयोजनम् । एतदुक्तं भवति – शरीरापेक्षा कदाचिदपि संविद्रूपस्य नास्ति कुतः संविद्रूपस्य सर्वत्र अनुगतत्वात् शरीराणाम् अननुगमेन व्यतिरेकात्, यथा स्वप्ने चिदात्मनोऽनुवृत्तिः स्वप्नसाक्षित्वेन स्फुरणात्, स्थूलदेहस्य तु व्यावृत्तिरप्रतीतेः, सुषुप्तौ चिन्मात्रानुवृत्तिः–सुषुप्तावस्थासाक्षित्वेन स्फुरणात्, अन्यथा सुप्तः कः? इति प्रश्ने दत्ते तव किम् उत्तरं स्यात् इति आत्मनोऽनुवृत्तिरेव, लिङ्गदेहस्य तु व्यावृत्तिः,–गाढनिद्रायां सुषुप्तौ आभासमात्रपदार्थदर्शनगन्धमात्रस्यापि अनुपलब्धेः । एवं समाध्यवस्थायां तुरीयदशायां शुद्धचिदानन्दस्फुरणावस्थानेन आत्मनोऽनुवृत्तिः–समाहितत्वात् तस्य, सुषुप्त्युपलक्षितस्य कारणदेहरूपस्य अज्ञानस्य अप्रतीतेर्व्यावृत्तिः इत्यर्थः । एवम् अवस्थाचतुष्टये देहत्रयस्य अन-

---

पं० १२ क० पु० शरीरानुगमनेनेति पाठः । ख० पु० शरीराणां सर्वत्रेति पाठः ।

पं० १४ क० पु० स्मरणादिति पाठः ।

पं० १९ ख० पु० आत्मनो निवृत्तिरिति पाठः ।

पं० २१ क० ख० ग० पु० प्रतीतिरिति पाठः ।

नुवृत्तत्वात् आत्मनः संविद्रूपस्य तु सर्वावस्थासु अनुवृत्तेः तत्तदेहापेक्षां विहायापि स्वातन्त्र्यम् इति सर्वं सूक्तम्

'अपेक्षां स्वशरीरस्य............।'

इत्यादि । परमार्थतस्तु — स्ववत् स्वीयदेहवत्, अन्यशरीरेऽपि सर्वत्र प्रमेयपटलजाते

'स्वाङ्गकल्पेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।' (प्रत्य० ४।१।४)

इत्यादिनीत्या स्वावयवभूते सर्वदेहसमूहे चेतनाम् अनुभावयेत् । कथं? स्वशरीरापेक्षां त्यक्त्वा चिन्मात्ररूपस्य मम सर्वत्र तुल्यस्थितत्वेन निखिलं जगत् ममैव वपुः, न तु एकदेशावयवतुल्यः अयं देहवराकः, एतस्मिन् देहावयवे नष्टेऽपि अन्ये सर्वे देहा मम सन्त्येव इति किमनेन, इत्थं ममताविषयीकृतां स्वशरीरापेक्षां त्यजेत्, अन्यथा अवयवान्तरनिःसृतकण्ठमात्रस्थितप्राणमृतप्रायशवतुल्यो भवेत् । एतद्वर्णना तु विरूपाक्षपञ्चाशिकायाम्

'उत्क्रम्य विश्वतोऽङ्गात्
 तद्भागैकतनुनिष्ठिताहन्तः ।
कण्ठलुठत्प्राण इव
 व्यक्तं जीवन्मृतो लोकः ॥'

इति । तस्मात् परत्र शरीरापेक्षसंवित्त्यनुगतत्वभावनेन कतिपयैः दिनैः एव सर्वव्यापको भवेत् ॥ १०७ ॥

---

## निराधारं मनः कृत्वा
## विकल्पान्न विकल्पयेत् ।

---

पं० ६ वा० पु० स्वाङ्गरूपेषु इति पाठः ।

तदात्मपरमात्मत्वे
भैरवो मृगलोचने ॥ १०८ ॥

---

त्यक्तबाह्यान्तरलम्बनं मनः कृत्वा संकल्पकला यदा न विकल्पयेत्, तदा जीवात्मपरात्मभावे भैरव एव । संकल्पकलया जीवत्वं, निर्विकल्पदशया ब्रह्मत्वम् इत्यतो विकल्पान् न विदध्यात् ॥ १०८ ॥

' सोऽहं ममायं विभव इति प्रत्यभिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥ '

इति उक्तनयेन सोऽहं शुद्धबोधस्वरूपः, जगच्च इदं मदीयः स्फारः इति द्विविधां प्रत्यभिज्ञां दर्शयन्, प्रथमं सोऽहम् इति प्रतीकं व्याचष्टे

---

सर्वज्ञः सर्वकर्ता च
व्यापकः परमेश्वरः ।
स एवाहं शैवधर्मा
इति दार्ढ्याद्भवेच्छिवः ॥१०९॥

---

शिवस्य अयं शैवो धर्मः—स्वच्छस्वातन्त्र्यादिः यस्य सः शैवधर्मा, स एव अहम् अहमेव स इति असंदिग्धत्वेन भावनात् शिवता । इयं शाक्ती भूः ॥ १०९ ॥

ममायं विभवः इति प्रत्यभिज्ञांशं विवृणोति

---

जलस्येवोर्मयो वह्ने-
ज्वालाभङ्ग्यः प्रभा रवेः ।
ममैव भैरवस्यैता
विश्वभङ्ग्यो विभेदिताः ॥११०॥

---

विश्वभङ्ग्यः संसारविच्छित्तिलहर्यो, विभेदिताः संजातभेदाः इत्येवं परिजानतः, सोऽहं, अहं स इत्येकेन प्रकारेण, ममायं विभवः इति प्रकारान्तरेण प्रत्यभिजानतः इति अन्वये इति एव-कारौ निपातौ प्रत्यभिज्ञाद्वैधं सूचयतः, अन्यथा प्रकारार्थस्यैव भावात् अनयोः पौनरुक्त्यम् आपतेत् । ये तु 'सर्वो ममायम्, सर्गो ममायम् इत्यादि पाठान्तरं कल्पयन्ति ते पण्डितंमन्याः

'स एवाहं शैवधर्मा ·········· ।'
'ममैव भैरवस्यैता ············ ।'

इति पृथक् धारणाद्वयार्थं पद्यद्वयं परमेश्वरोपादिष्टं दृष्ट्वापि मूढाः । न हि पृथगात्मा नाम पशुः कश्चिदन्योऽप्यहम्, अपि तु यः प्रकाशात्मा स एव अहम्, स च अहमेव, न तु अन्यः कश्चित् इति सोऽहम् इति प्रतीकं प्रत्यभिज्ञासूत्रविमर्शिनीकारेण विवृतम् । तथा ममायं विभवः इति द्वितीयं प्रत्यभिज्ञांशं विवृणुता अतो विकल्पसृष्टिरपि मम स्वातन्त्र्यलक्षणो विभवः इत्येवमात्मकं च प्रकटीकृतं । सहृदयजनेन तदग्रे दर्शितं तन्मुखविषयचपेटापातन-

---

पं० ६ क० पु० इत्येकेन प्रकारेण इति पाठतोऽनन्तरः 'प्रत्यभिज्ञां परिजान् इत्यपभाषितां रचयतः तथा एवमनेन प्रकारेण' इत्यधिकः पाठः ।

पं० १४ क० पु० प्रत्यगात्मा इति, कश्चिदहमिति च पाठः ।

मिव अनुभूय स्वयमेव अत्यन्तं स्फुटिता भवेयुः इति सिद्धा द्विविधा प्रत्यभिज्ञा ॥ ११० ॥

---

भ्रान्त्वा भ्रान्त्वा शरीरेण
त्वरितं भुवि पातनात् ।
क्षोभशक्तिविरामेण
परा संजायते दशा ॥ १११ ॥

---

पूजकदशायां, जङ्गालपान्थदशायां वा प्रद्युम्नपीठादिपरिदक्षिणाङ्केन अहर्निशं मार्गभ्रमणदार्ढ्याभ्यासोपकारकेण स्वदेहेन परिभ्रम्य, अन्ते शीघ्रं भुवि पातनात् अर्थात् शरीरस्य भुवि स्थितस्य सतो वेगशक्तेर्विरामे परा निर्विकल्पदशा प्रादुर्भवति ॥ १११ ॥

---

आधारेष्वथवाऽशक्त्या-
ऽज्ञानाच्चित्तलयेन वा ।
जातशक्तिसमावेश-
क्षोभान्ते भैरवं वपुः ॥ ११२ ॥

---

ज्ञानविषयेषु द्रव्येषु असामर्थ्येन वा यः चित्तलयः अज्ञानात् ज्ञानादेरभावतो यः चित्तप्रलयः तेन वा कृत्वा, यो जातः शक्तौ

अनाश्रिताख्यायां समावेशः तेन क्षोभान्ते चञ्चलताविरामे सति 'भैरवं वपुः' पूर्वोक्तस्वानुभवानन्दावस्थारूपं भवति ॥ ११२ ॥

---

संप्रदायमिमं देवि
शृणु सम्यग्वदाम्यहम् ।
कैवल्यं जायते सद्यो
नेत्रयोः स्तब्धमात्रयोः ॥११३॥
संकोचं कर्णयोः कृत्वा
ह्यधोद्वारे तथैव च ।
अनच्कमहलं ध्याय-
न्विशेद्ब्रह्म सनातनम् ॥११४॥

---

अधोद्वारे पायुरन्ध्रे स्वपार्ष्णिना पीडनं कृत्वा, अहलं हल्रहितम्, ऐश पाठोऽयम् । शेषं स्पष्टम् ॥ ११३ ॥ ११४ ॥

---

कूपादिके महागर्ते
स्थित्वोपरि निरीक्षणात् ।
अविकल्पमतेः सम्यक्
सद्यश्चित्तलयः स्फुटम् ॥११५॥

---

कूपः प्रहिः, आदिना गिरिशृङ्गादेः ग्रहणम् । महागर्ते बृहत्सुषिरे कूपादौ स्थित्वा, सामीप्यं सप्तम्यर्थः । वटे गावः सुशेरते इतिवत् महाश्वभ्रादिसमीपे स्थित्वा, ऊर्ध्वमेव कूपाद्याकाशनिश्चलदृष्ट्यवलोकनात् हेतोः, अविद्यमानो विकल्पो यस्याः सा तथाविधा मतिः यस्य तस्य निर्विकल्पबुद्धेः भावकस्य तत्क्षणमेव चित्तप्रशान्तिः निश्चितम् । बहुव्रीहिगर्भो बहुव्रीहिः ॥ ११८ ॥

---

यत्र यत्र मनो याति
बाह्ये वाभ्यन्तरेऽपि वा ।
तत्र तत्र शिवावस्था
व्यापकत्वात्क्व यास्यति ॥११६॥

---

यस्मिन् यस्मिन् नीले सुखादौ च मनो – विकल्पः, संवेदनं याति प्रसरति, तत्र तत्र स्फुरत्संवित्सतत्त्वे शिवस्य चित्प्रकाशस्य अवस्था अवस्थानं क्व यास्यति न क्वचित् गमिष्यति । अत्र हेतुः व्यापकत्वात् इति । दिक्कालाकारैः प्रकाशसारत्वात् प्रकाशमानैः प्रकाशात्मनः स्वात्मभैरवस्य अनवच्छेदात् इत्यर्थः । इयम् अवस्था तु योगशास्त्रे समाधिषट्कपरिपाकलब्धो नित्यसमाधिः साक्षात्काररूपोऽयत्नायत्तः सप्तमः समाधिरुक्तः । तथा च तत्रैव समाधिषट्कलक्षणम् उक्तम्, यथा – समाधिर्नाम चित्तस्य अखण्डात्माद्वयब्रह्मतामात्रेण स्थिरीभावः, स तु बहिरन्तर्वा विधेयः । तत्र हृदयान्तः कर्तव्यः समाधिः द्विविधः – सविकल्पक-निर्विकल्पकभे-

दात् । सविकल्पोऽपि द्वेधा—दृश्यसंपृक्तः शब्दसंपृक्तश्च । तत्र दृश्यसंपृक्तस्य समाधेर्लक्षणं वाक्यसुधायाम्

'कामाद्याश्चित्तसादृश्यात्तत्साक्षित्वेन चेतनाम् ।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥'

इति । अयं स्थूलः सविकल्पकः समाधिः । सूक्ष्मं सविकल्पकं द्वितीयं समाधिमाह तत्रैव

'असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।
अस्मीति शब्दविद्धोऽयं सविकल्पसमाहितः ॥'

इति । एवं यत्नतः क्रमेण समाधिद्वयसंपत्तौ स्वयमेव भवन्तं निर्विकल्पसमाधिम् आह

'स्वानुभूतिरसावेशाद् दृश्यशब्दानुपेक्ष्य तु ।
निर्विकल्पः समाधिः स्यान्निवातस्थलदीपवत् ॥'

इति च । एवं सविकल्पौ द्वौ, निर्विकल्पक एकः इति त्रयः समाधयः । एतत्समाधित्रयं सूर्यचन्द्राकाशादिबाह्यालम्बनं व्युत्पादयति

'हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रे नामरूपपृथक्स्थितः ॥'

इति दृश्यानुविद्धसविकल्पकः समाधिः । शब्दानुविद्धं सविकल्पकं समाधिम् आह तत्रैव

'अखण्डैकरसं वस्तु सच्चिदानन्दलक्षणम् ।
इत्यविच्छिन्नचिन्तेयं समाधिर्मध्यमो भवेत् ॥'

---

पं० ५ ख० पु० सविकल्पकं द्वितीयसमाधिमाह इति पाठः ।
पं० ८ क० ग० पु० सविकल्पः समाहितः इति पाठः ।
पं० १४ ग० पु० आदिलम्बनमिति पाठः ।

इति । अत्रापि केवलब्रह्माकारत्वात् मनसो निश्चेष्टनिर्विकल्पकः समाधिर्यथा

> ' स्तब्धीभावरसास्वादात्तृतीयः पूर्ववन्मतः ।
> एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् ॥ '

इति । एतच्छ्लोकप्रतिबिम्बस्तु तत्रैव

> ' देहाभिमाने गलिते विज्ञाते परमात्मनि ।
> यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ '

इति ॥ ११६ ॥

---

यत्र यत्राक्षमार्गेण
चैतन्यं व्यज्यते विभोः ।
तस्य तन्मात्रधर्मित्वा-
च्चिल्लयाद्भरितात्मता ॥ ११७ ॥

---

यत्र यत्र नीलसुखादौ अक्षमार्गेण चक्षुरादिसुषिरमार्गेण प्रभोः परभैरवस्य आत्मनः चैतन्यं चित्प्रकाशः अभिव्यज्यते स्फुरति, तस्य नीलादेः तन्मात्रधर्मित्वात् चैतन्यातिरेके चेद्यत्वाभावापत्तेः दर्पणमात्रात्मकविचित्रप्रतिबिम्बवत् प्रकाशस्थचैतन्यमात्रस्वभावत्वं विमृश्य विश्वभित्तिभूतायां चितौ एव यो लीयते तस्य परभैरवतैव । यथा घनीभूतः प्रकाश एव सूर्यमण्डलं जातं, तथा चिदेव हि आश्यानीभूता जगदात्मना भाति इति आम्नायः ॥ ११७ ॥

क्षुताद्यन्ते भये शोके
गह्वरे वा रणाद्भुते ।
कुतूहले क्षुधाद्यन्ते
ब्रह्मसत्तामयी दशा ॥ ११८ ॥

---

समीपगा इति पाठान्तरम् । ब्रह्मसत्ता अनवच्छिन्नचिदानन्द-स्फुरत्ता समीपगा निकटस्थितैव इति । तां तत्र तत्र अवसरे विमृश्य सुप्रबुद्धः समाविशेत्, अप्रबुद्धः पुनरत्र मूढ एव इति । एषा शांभवी भूः ॥ ११८ ॥

---

वस्तुषु स्मर्यमाणेषु
दृष्टे देशे मनस्त्यजेत् ।
स्वशरीरं निराधारं
कृत्वा प्रसरति प्रभुः ॥ ११९ ॥

---

स इति, तत् इति स्मृतिज्ञानेन वेद्यमानेषु पदार्थेषु अनुभव-ज्ञानविषये स्वाधारभूते मनः त्यजेत् प्रक्षिपेत्,—अनुभवपूर्वक-त्वात् स्मृतेः । स्वदेहं निरालम्बनं विधाय, अनुभवरूपः प्रभुः

---

पं० ६ ख० पु० निकटसिता इति पाठः ।

पं० १३ ख० पु० पदार्थेनुभवेति पाठः ।

पं० १४ क० पु० पूर्विकत्वात् इति पाठः ।

स्मरणानुभवयोः स्मर्यमाणानुभूयमानयोश्च एकानुसंधात्रात्मा प्रसरति प्रादुर्भवति ॥ ११९ ॥

---

क्वचिद्वस्तुनि विन्यस्य
शनैर्दृष्टिं निवर्तयेत् ।
तज्ज्ञानं चित्तसहितं
देवि शून्यालयो भवेत् ॥ १२० ॥

---

कस्मिंश्चित् वस्तुनि दृष्टिम् अक्षिरूपां निक्षिप्य, कंचित् पदार्थं दृष्ट्वा इत्यर्थः । शनैः शनैः तस्य पदार्थस्य ज्ञानं तद्विषयसंकल्पसहितं निवर्तयेत् शून्यभावनया अन्तर्लक्ष्यबहिर्दृष्टिन्यायेन वा, तेनैव शून्ये आलयो – विश्रान्तिः यस्य एवं-विधः संयमी भवेत् । देवि शून्यलयो भवेत् इति पाठान्तरम् ॥ १२० ॥

---

भक्त्युद्रेकाद्विरक्तस्य
यादृशी जायते मतिः ॥
सा शक्तिः शांकरी नित्यं
भावयेत्तां ततः शिवः ॥ १२१ ॥

---

भक्तिरिति

'न पादपतनं भक्तिर्व्यापिनः परमेशितुः ।
भक्तिर्भावस्वभावानां तदेकीभावभावनम् ॥'

इति कृतलक्षणा । उद्रेकः आधिक्यम् ॥ १२१ ॥

---

वस्त्वन्तरे वेद्यमाने
शनैर्वस्तुषु शून्यता ।
तामेव मनसा ध्यात्वा
विदितोऽपि प्रशाम्यति ॥ १२२ ॥

---

कस्मिंश्चित् एकस्मिन् वस्तुनि ज्ञायमाने, सर्ववेद्येषु तदन्येषु बाह्याभ्यन्तरेषु वस्तुषु वेद्यमानेष्वपि शून्यता भावनीया, शून्यता तत्कालम् अनाभासनं । तामेव वेद्याभावात्मकचित्प्रकाशरूपां शून्यतां मनसा निर्विकल्पसंविदा ध्यात्वा विमृश्य विदितोऽपि वेदनात् अपि प्रशाम्यति—शान्तब्रह्मस्वरूपो भवति । विदि-शब्द इकारान्तो भेदप्रथारूपज्ञानवाचकः । तज्ज्ञानं तद्वस्त्वनुभवः चित्तसहितं तद्वासनायुक्तं कचिद्वस्तुनि इत्यत्र एकपदार्थमात्रं दृष्ट्वा तदनु तद्विषयसंकल्पज्ञानादिनिवर्तनम् उक्तम् । इह पुनर्वेद्यमानवस्तुज्ञानानन्तरं सर्ववेद्येष्वपि ज्ञायमानेषु शून्यताभावनया तद्वेदनादपि प्रशान्तिलक्षणो विशेषः ॥ १२२ ॥

---

'अत्र नाथः समाचारं पटलेऽष्टादशेऽभ्यधात् ।
नात्र शुद्धिर्न चाशुद्धिर्न भक्ष्यादिविचारणम् ॥
न द्वैतं नापि चाद्वैतं लिङ्गपूजादिकं न च ।
न चापि तत्परित्यागो निष्परिग्रहतापि वा ॥
सपरिग्रहता वापि जटाभस्मादिसंग्रहः ।
तत्त्यागो न व्रतादीनां चरणाचरणं च यत् ॥
क्षेत्रादिसंप्रवेशश्च समयादिप्रपालनम् ।
परस्वरूपलिङ्गादिनामगोत्रादिकं च यत् ॥

नास्मिन्विधीयते किंचिन्न चापि प्रतिषिध्यते ।
विहितं सर्वमेवात्र प्रतिषिद्धमथापि वा ॥
किं त्वेतदत्र देवेशि नियमेन विधीयते ।
तत्त्वे चेतः स्थिरीकार्यं सुप्रयत्नेन योगिना ॥
तच्च गम्यं यथैव स्यात्स तथैव समाचरेत् ।
एतन्मनसि संधाय वसिष्ठेन स्फुटं कृतम् ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
तत्त्वे निश्चलचित्तस्तु भुञ्जानो विषयानपि ॥
न संस्पृश्येत दोषैः स पद्मपत्रमिवाम्भसा ।'

अस्य योगिनः

'पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम् ॥
सुरूपं च विरूपं च तत्सर्वं तेज उच्यते ।
निर्दोषं हि समं ब्रह्म तत्स्फुटं नित्यमभ्यसेत् ॥
विषापहारिमन्त्रादिसंनद्धो भक्षयन्नपि ।
विषं न मुह्यते तेन तद्वद्योगी महामतिः ॥
अशुद्धं हि कथं नाम देहाद्यं पाञ्चभौतिकम् ।
प्रकाशतातिरिक्ते किं शुद्ध्यशुद्धी हि वस्तुनि ॥'

इति रहस्यशास्त्रोक्तनीत्या शुद्ध्यशुद्धिविकल्पं विहाय केवलचिद्विमर्शो निर्बाधः इत्याह

किंचिज्ज्ञैर्या स्मृता शुद्धिः
साऽशुद्धिः शंभुदर्शने ।
न शुचिर्ह्यशुचिस्तस्मा-
न्निर्विकल्पः सुखी भवेत् ॥१२३॥

किंचिन्मात्रबोधयुक्तैः धर्मशास्त्रज्ञैः या शुद्धिः मृज्जलादिना शुद्धभावः स्मृता सा शंभुदर्शने पारमेश्वरतत्त्वसाक्षात्कारे सति अशुद्धिः अशौचमेव – वक्ष्यमाणात् हेतोः । यद्वा शंभुदर्शने परमेश्वरभाषिते शास्त्रे किं तु साऽशुद्धिः, न शुचिः न नैर्मल्यं निर्देशस्य भावप्रधानत्वात् ,सा अन्यशास्त्रोक्ता शुद्धिः न शुचिः न शुद्धत्वं, किं तु हि अशुचिः, हिः अवधारणे हेतौ वा अशुद्धतैव । मृदादिशुद्धेः तत्त्वज्ञानं प्रति अकिंचित्करत्वेन अनङ्गत्वात् । यदुक्तं महागुरुभिः

'मृज्जलादिविशुद्धोऽपि न पवित्रो बहिर्मुखः ।
बहिर्निर्मलमध्यस्थपुरीषकलशादिवत् ॥'

इति । अशुद्धिः इति पूर्वम् अभिधाय, तदनु 'न शुचिः' इति उक्त्वापि पुनः 'हि अशुचिः' इति अशुचिपौनरुक्त्यं तत्त्वज्ञानानुपयोगित्वदार्ढ्यप्रतिपादनार्थं, मृदादिशुद्धेः कर्माङ्गत्वात् तदधिकारिणि सा भवतु । यदुक्तं

'अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
स्नातोऽधिकारी सर्वत्र दैवे पित्र्ये च कर्मणि ॥

इति । एतत् तु न क्वचित् उक्तम्

'तदा ज्ञानाधिकारोऽस्ति मृज्जलादिशुचिर्यदा ।'

इति । तत्त्वज्ञानं प्रति मृदादिशुद्धेः प्रतिबन्धकत्वं न भवति इत्यतः सापि अस्तु इति चेत्, भवतु एतत् – ज्ञानप्रतिबन्धकत्वाभावात्, परंतु ज्ञानं निरपेक्षं न कर्मवत् शुद्ध्यपेक्षम् । वयं तु जानीमहे – मृदादिना देहनैर्मल्ये क्रियमाणे, देहदर्शने जाते तत्सुन्दरतादिदर्शनेन तदभिमानोऽपि तत्त्वज्ञानिनो भवेदपि अन्तर्मुखत्वविस्मृत्या बहिर्मुखतापत्तेः । ज्ञानिनस्तु तथा स्थितिर्विधेया यथा

पं० ६ क० पु० किंतुर्हि इति पाठः ।

वारंवारं चिद्विमर्शघनाभ्यासात् देहादिविस्मरणमेव भवेत्, स तु कदाचिदपि देहं न पश्यति । यदुक्तं श्रीभागवते

'देहं च नश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।'

इति । यदि न तत्त्वज्ञानोपकारिणी मृदादिशुद्धिः, तत्कथं भगवता गीतम्

'आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।'

इत्यादिना । शौचमपि तत्त्वज्ञानम् इति चेत् सत्यं, मात्र-भौमाग्नेय-वायव्य-दिव्य-वारुण-मानसभेदेन सप्तविधं स्नानं स्कन्दपुराणे अभिहितम्

'आपो हि ष्ठेति वै मात्रं……………… ।'

इति आरभ्य

'वारुणं चावगाह्यं तु मानसं विष्णुचिन्तनम् ।'

इति पर्यन्ते सर्वस्नानफलभूतं मुख्यं मानसस्नानम् उक्तम्, इत्यतः केवलवारुणस्यापि स्नानान्तरतुल्यत्वात्, प्रत्युत तस्यापि गौणत्वात् शौचपदेन विष्णुचिन्तनात्मकं मुख्यं स्नानं किं न वक्तुं शक्येतापि, इति विनिगमनाग्रहाङ्गीकरणं न साधु । धर्मशास्त्रोक्तत्वात् वारुणविधानं धर्मः, इति चेत् हन्त, तर्हि धर्मत्वाभ्युपगमात् परमधर्मः तत्त्वज्ञानात्मा मृदादिशुद्धिधर्मात् अभीष्टतरः । यदुक्तं याज्ञवल्क्यस्मृतावेव

'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं स परमो धर्मो यद्योगेनात्मदर्शनम् ॥'

इति । अन्यच्च अक्रियमाणायामपि मृदादिशुद्धौ परमात्मनो न काचित् हानिः—निराकारत्वेन आकाशतुल्यत्वात्, क्रियमाणाया-

मपि न काचित् वृद्धिः । देहस्तु मृदादिशुद्धोऽपि मलिन एव, हि यस्मात् अन्यशास्त्रोक्ता अशुद्धिरेव । तस्मात् मृदादिशौचविनाकृतोऽपि निर्विकल्पज्ञानेन सति मनःशौचे त्यक्तमनोमलः सुखी भवेत् ॥ १२३ ॥

---

सर्वत्र भैरवो भावः
सामान्येष्वपि गोचरः ।
न च तद्व्यतिरेकेण
परोऽस्तीत्यद्वया गतिः ॥१२४॥

---

सर्वत्र सर्वेषु प्रदेशेषु भावो भैरवः – सत्स्वरूपो विज्ञात्रात्मा, न तु बौद्धादिवत् ज्ञेयशून्यरूपः, सामान्यजनेषु विवेकहीनेषु अपि गोचरो ग्राह्य – सर्वेषां प्रमातॄणां सकलप्रलयाकलादीनाम् अहं जानामि करोमि इत्याद्यहं-विमर्शस्य स्फुटतया स्फुरणात्, न तु भैरवव्यतिरेकेण अन्यः कश्चित् अस्ति इति अहं-विमर्शस्य ऐक्यम् । अहं-रूप एव परमेश्वरः, स तु प्रकट एव, किम् आणवाद्युपायत्रयेण, नहि स्फुटतरस्य उपायान्वेषणम् उचितम् । यदुक्तं

'उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः
स्वयं प्रकाशं शिवमाविशेत्क्षणात् ॥'

इति । तथा संवित्प्रकाशेऽपि

---

पं० ९ क० पु० विज्ञातात्मा इति पाठः ।

'अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥'

इति । महार्थमञ्जर्यां च

'यं जानन्ति जडा अपि
जलहार्योऽपि यं विजानन्ति ।
यस्यैव नमस्कारः
स कस्य स्फुटो न भवति कुलनाथः ॥'

इति । श्रुतिरपि

'उतैनं गोपा अदृशन्नुतैनमुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥'

इति ॥ १२४ ॥

शाक्तीं भूमिम् उपदिशति

---

समः शत्रौ च मित्रे च
समो मानावमानयोः ।
ब्रह्मणः परिपूर्णत्वा-
दिति ज्ञात्वा सुखी भवेत् ॥१२५॥

---

शांभवीं भूमिम् उपदिशति

---

न द्वेषं भावयेत्क्वापि
न रागं भावयेत्क्वचित् ।

रागद्वेषविनिर्मुक्तौ
　　मध्ये ब्रह्म प्रसर्पति ॥१२६॥

---

प्रसर्पति विकसति ॥ १२६ ॥

---

यदवेद्यं यदग्राह्यं
　　यच्छून्यं यदभावगम् ।
तत्सर्वं भैरवं भाव्यं
　　तदन्ते बोधसंभवः ॥ १२७ ॥

---

यत् अवेद्यं ज्ञेयदशानास्पदम्, अनुपादेयम्, यत् शून्यं

　　' सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः ।
　　सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥ '

इति उक्तस्वरूपम्

　　' सावस्था काप्यविज्ञेया मादृशां शून्यतोच्यते ।
　　न पुनर्लोकरूढ्यैव नास्तिक्यार्थानुपातिनी ॥ '

इति उक्तत्वात् यदेव वेद्यस्य अग्रहणं तदेव शून्यत्वं, तेन सुगत-सुतभाविता शून्यभूरन्या, देवीनयोपासिनां च अन्या । एतदेव विमर्शदीपिकायां ध्वनितम्

　　' स्वतन्त्रं परिपूर्णं च शिवाख्यं शून्यधाम तत् ।
　　तत्त्वानि यत्र लीयन्ते यस्मात्समुदयन्ति च ॥

---

पं० ८ ग० पु० ज्ञानदशा इति पाठः ।

तत्त्वेश्वरास्ततो जातास्तत्रैव निवसन्ति च ।
क्षीयन्ते किल तत्रैव शिवाख्ये शून्यधामनि ॥
दर्शनान्तरदृष्टानि यानि शून्यान्तराण्यपि ।
तेषामुत्पत्तिविलयौ शिवशून्ये सदोदिते ॥
न तदस्ति न यत्तत्र न तदस्ति न यत्र तत् ।
अन्तर्बहीरूपतया ततोऽन्यन्नोपपद्यते ॥
उपेयमितरन्नास्ति स्वातन्त्र्यात्परमे नये ।
तदनादृत्य गाहन्ते सौगताः शून्यतां जडाः ॥'

इति स्वातन्त्र्यस्वरूपं तच्छून्यं, तथा यदभावगं गगनकुसुमादि-ष्वपि सत्तास्फूर्तिप्रदत्वेन महासामान्यरूपम्

'सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।'

इति उक्तत्वात्

'नमामः सर्वसामान्यं रूपं तत्पारमेश्वरम् ।'

इति उक्तेश्च, तत् एव सर्वस्वरूपं भैरवं भाव्यं—भैरवत्वेन भावनीयम्, तद्भावनाप्रकर्षेण पर्यन्ते सम्यक् बोधो भवेत् । अभावव्यापकं महासत्तास्वरूपं च प्रकटीकृतं महेश्वरानन्दपादैः

'कः सद्भावविशेषः
कुसुमाद्भवति गगनकुसुमस्य ।
यत्स्फुरणानुप्राणो
लोकः स्फुरणं च सर्वसामान्यम् ॥'

इति । सद्भावः सत्त्वम् तस्मात् विशेषो—भेदः असद्भावोऽसत्त्वम् इति यावत् । कोऽसद्भावो गगनपुष्पस्य सतः कुसुमात्—न कश्चित् इत्यर्थः । अत्र हेतुमाह यत्स्फुरणानुप्राण इति ॥ १२७ ॥

---

पं० २१ क० पु० सद्भाव इत्यारभ्य अनुप्राणेत्यन्तः पाठो नास्ति ।

नित्ये निराश्रये शून्ये
व्यापके कलनोज्झिते ।
बाह्याकाशे मनः कृत्वा
निराकाशं समाविशेत् ॥१२८॥

---

नित्यत्वादिविशेषणप्रतिपादितव्याप्तिके बाह्यगगने मनो विमर्शात्मकं ज्ञानं कृत्वा समापन्नं विधाय निरालम्बनचिदुदये सति, आकाशात् निष्क्रान्तम् अशून्यं धाम समाविशति इति शात्तयेवेयं भूः ॥ १२८ ॥

---

यत्र यत्र मनो याति
तत्तत्तेनैव तत्क्षणम् ।
परित्यज्यानवस्थित्या
निस्तरङ्गस्ततो भवेत् ॥१२९॥

---

यत्र यत्र विषये मनः चाञ्चल्यात् याति, तत्तत् वस्तु तेनैव अविकल्पसंवेदनेन मनसा तत्क्षणं परिहृत्य, पुनरपि गतं चेत् पुनरपि प्रत्याहृत्य

'उभयाधीनश्चित्तवृत्तिनिरोधः ।' (पा० १ सू० १२.)

इति पतञ्जलिनीत्या

'अभ्यासेनैव कौन्तेय वैराग्येण च गृह्यते ।'

---

पं० ८ क० ग० पु० इति शात्तयेव इति पाठः ।

इति भगवत्संभाविते चित्तवृत्तिनिरोधे वैराग्याभ्यासयुगलदार्ढ्यात् मनसो निरालम्बनताप्राप्तियुक्त्या परभैरवावेशवान् भवेत् । उक्तं च गीतासु

'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥' (६–२७)

इति ॥ १२९ ॥

---

भया सर्वं रवयति
सर्वदो व्यापकोऽखिले ।
इति भैरवशब्दस्य
संततोच्चारणाच्छिवः ॥ १३० ॥

---

भा ऐ रव–इति अक्षरचतुष्कस्य अयमर्थः – अनुत्तररूपोऽकारः, इच्छारूपः इकारः, अनुत्तरविश्रान्तिरेव आनन्दः, इच्छायां विश्रान्तिः ईशनम्, – तेन एष क्रियाशक्तेः प्रारम्भः आकार ईकारश्च, भा संविद्रूपः प्रकाशः, इच्छा ईशनं च आनन्दवपुषि अनुत्तरपरधामनि च प्राग्भाविनि स्वरूपात् अप्रच्याविनि यदा अनुप्रविशति तदा अ आ इ ई – इत्येतत् एकारतया संपद्यते । अनुत्तरानन्दयोः इच्छायां प्रसरणेन एकारोत्पत्तिः, तत्रापि पुनरनुत्तरानन्दसंघट्टात् ऐकारोत्पत्तिः । अत एव संध्यक्षरसंज्ञा एकार-ऐकारयोः । अत एव

---

पं० २ क० निरालम्बनतायुक्त्या इति पाठः ।

'अवर्ण इवर्णे ए।'

इत्यनेन अ आ ए – इत्येतत्, अकार-एकारयोः एकादेशेन अथवा आकार-एकारयोः एकादेशेन ऐ-भावः इति संवित्प्रकाशः शवलीभूतः। सा इयं स्फुटा क्रियाशक्तिः, स्फुटक्रियाशक्तिमत्त्वम् ऐकारार्थः। अत एव एकाक्षरकोशे

'........ऐकारः स्यान्महेश्वरः।'

इति उक्तम्। तेन भैरवपदस्य अयमर्थः – भया संवित्प्रकाशरूपया ऐकारः क्रियाशक्तिमान् महेश्वरः सर्वं रवयति विमृशति इति भैरवः इति एतदेव अभिधेयम्। यद्वा भया ज्ञानात्मिकया शक्त्या ऐकारेण माहेश्वर्यव्यञ्जिकया क्रियाशक्त्या सर्वं विमृशति। यदुक्तं प्रत्यभिज्ञायाम्

'........जडभूतानां प्रतिष्ठा जीवदाश्रया।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्॥' (१।१।४)

इति। अर्थान्तरं तु द्वितीयपादेन आह – सर्वदो व्यापकोऽखिले इति। तथा भया सर्वं शुभाशुभं राति ददाति, सर्वं वाति अनुगच्छति व्यापकतया इति भैरवः

'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।'

इति हि उपनिषत्, इति अहर्निशम् उच्चारणात् परमशिवीभावो भवति। एतदुच्चारणमाहात्म्यं श्रीमदभिनवगुप्तपादैः दर्शितम्

'आत्मन्येव न मामि नाम विसरद्रोमाञ्चरेखाङ्कुरा-
क्रान्त्या किं च दवीयसीरपि दिशो जानामि रुन्धे हठात्।
यन्मे भैरव भैरवेति रटतो हृद्ग्रन्थिविस्फोटन-
त्रुट्यत्पाशवपाशपञ्जरभरः कायोऽप्यनन्तायते॥'

---

पं० ९ श० पु० भैरव इत्यारभ्य विमृशतीत्यन्तः पाठो नास्ति।
पं० २० क० पु० अङ्कुरकान्त्या इति पाठः।

इति । अत्र स्वदेहे अमानम् अप्रभवनम्, अतिदूराणां काष्ठानां बलात् आक्रमणज्ञानं, त्रुट्यत्पशुसंबन्धि पाशपञ्जरत्वं स्वकायस्य पराकाशायमानत्वं विना न संभवति इत्यतः—कायोऽप्यनन्तायते इति उक्तम् । समस्ततादात्म्यभावनया जीवन्मुक्ततायां परमेश्वरैकरूपतावेशात् परसिद्धिलाभः, यन्मया स्तुतं—आत्मन्येव न मामि इति । एतत्तु विवृतिविमर्शिन्याम् अभिनवगुप्तपादैः दर्शितम् । इयं करङ्किणी मुद्रा ।

'अनन्तं सुरवर्त्म खम् ।'

इत्यमरः । कायोऽपि मोक्षायते इति पाठान्तरम् ।

केचित्तु भ्रियात्सर्वं रवयति इति पठन्ति, तत् न साधु—यदि भृरवः इत्यादिपदसिद्धिः स्यात् तर्हि एतत् संगच्छेत । यद्यपि प्रचुरपुस्तकेष्वपि एष पाठोऽस्ति, तथापि धारणपोषणार्थो भरतिः कतमदक्षरमपेक्ष्य योजनीयः,—न तावत् भैरवपदमध्यात् भैकारापेक्षो भरतिः रेफापेक्षो वा वकारापेक्षो वा । समुदायपक्षे तु नहि 'भर' इत्यर्णयुगस्य भरणादिकं वकारमात्रस्य रवणार्थत्वं युक्तिमत् प्रथमं वर्णद्वयं संयोज्य पुनर्वकारस्य पूर्वसंगतरेफसंयोजनेन काकाक्षिन्यायापादनं न युक्तं—कष्टकल्प्यत्वेन कल्पनागौरवात् । भरण-रवण-वमनार्थो भैरवः इति चिरन्तनार्थोऽपि न युक्तिसहो—भैरवपदस्यैव सिद्धत्वात्, ऐकारस्य सुषिरपातो वकारवत् भैरवपदासिद्धिः । अन्यच्च द्वितीयचरणे तु परमेश्वरेणैव सर्वदत्वम् अखिले व्यापकत्वं विवृतम् । तत् राति-वाति-क्रियायुगलार्थो द्वितीयपादोक्तः क्षेमराजादिभिः न चेतितो, यतो विज्ञानोद्योतमङ्गलश्लोकप्रारम्भे भरणाद्यर्थ एव प्रकटीकृतः । सर्वधारकः,

---

पं० १२ ग० पु० भरणपोषणेति पाठः ।

सर्वपोषकः, सर्वप्रदः, सर्वव्यापी, भैरवः इति मूलग्रन्थाभिधेयं विचार्य भीरूणामभयप्रदो भैरवः, तथा भवभयाक्रन्दस्य कारणं, भीरवरुचाम् ईशः, भानि नक्षत्राणि ईरयति चालयति इति भेरः कालः तं वायति इत्यादिस्वकपोलकल्पितस्वचातुर्यमात्र-नैपुण्यप्रदर्शनविषये गजनिमीलनविधा इयम् । तदत्र सारासारार्थ-विवेकविषये सहृदया एव प्रमाणम् — इति क्षन्तव्यं गुरुभिः । एत-ज्जनकृतवर्णचतुष्काक्षरयोजनार्थस्तु तन्त्रालोकसारप्रदर्शितनयेनैव ज्ञेयः ॥ १३० ॥

---

अहं ममेदमित्यादि-
प्रतिपत्तिप्रसङ्गतः ।
निराधारे मनो याति
तद्ध्यानप्रेरणाच्छमी ॥१३१॥

---

अहं, मम इदम् — इत्यादिन्यूनाहन्ताज्ञानप्रसङ्गेनापि निरा-धारे वस्तुनि प्रबुद्धगोचरे पूर्णाहंभाव एव मनो याति — अहं-वि-मर्शस्य अत्रुटितत्वेन निर्विशेषत्वात् । परमानन्दात्मकत्वं तु आ-त्मनो न कदाचित् विच्छिद्यते — पूर्णाहं-विमर्शस्य परमात्मत्वेन सर्वत्र सत्त्वात् । अप्रबुद्धादीनां सर्वेषाम् एक एव आत्मा, सर्वे हि स्वात्मन्येव रागिणः, स्वात्मप्रेमैव परमेश्वरभजनम्

पं० ३ ग० पु० ईरयति कम्पयतीति पाठः ।
पं० ४ क० ख० पु० तं वातीति पाठः ।
पं० ५ क० पु० निमीलनमेव विधेयमिति पाठः ।
पं० १८ क० पु० भाजनमिति पाठः ।

'प्रेमैव ब्रह्म केवलम् ।'

इति उक्तत्वात् । अहं-विमर्शस्य न्यूनतापूर्णतादिना विच्छेदाभावात् प्रबुद्धात्मा अप्रबुद्धात्मा वा आनन्दस्वभाव एव । अतो महेश्वरानन्दादिभिः विद्यायां वाप्यविद्यायां स्वानन्दसत्तया स्वात्मविषयं परं प्रेम न कदाचित् हीयते इति उक्तम् । यथा

'नन्वात्मनः प्रियार्थे
सर्वस्य प्रियत्वं भणति श्रुतिः ।
तस्मादानन्दस्वभावः
आत्मा मुक्तोऽप्यमुक्तो वा ॥'

इति ।

'मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यते ।
अतस्तत्परमं तेन परमानन्दतात्मनः ॥'

इति ।

'त्वमेवात्मेश सर्वस्य सर्वश्चात्मनि रागवान् ।
इति स्वभावसिद्धां त्वद्भक्तिं जानञ्जयेज्जनः ॥'

इति । तस्मात् न कश्चित् अप्रबुद्धो न कश्चित् प्रबुद्धः सुप्रबुद्धो वा, किं तु स्वतन्त्रः परमेश्वर एव तथा तथा भाति । अबोधबोधसंबोधकल्पनया तत्स्वातन्त्र्यं विघटते, अतो बोधादिविकल्परहितत्वेन शान्तो भवेत् ॥ १३१ ॥

'अविनाशी वासुदेवो विष्णुर्विश्वम्भरो हरिः ।
इत्थं कीर्तनमात्रेण कलौ मोक्षो हि शाश्वतः ॥'

इति पाञ्चरात्रमतं कटाक्षेण प्रमाणयन् शाक्तीं भूमिम् आह

---

पं० ४ ग० पु० सत्ताया इति पाठः ।

नित्यो विभुर्निराधारो
व्यापकश्चाखिलाधिपः ।
शब्दान् प्रतिक्षणं ध्यायन्
कृतार्थोऽर्थानुरूपतः ॥१३२॥

विभुः परमेश्वरो नित्यत्वादिस्वरूपः इति अर्थानुगुण्येन तान् शब्दान् मुहुः चिन्तयन् कृतकृत्यो भवति इत्यर्थः । भट्टनारायणेनापि नामकीर्तनमाहात्म्यं स्तवचिन्तामणौ पदे पदे अभिहितम्

'नामापि ध्यायतां ध्यानैः किमन्यालम्बनैः फलम् ।'

इत्यादिना ॥ १३२ ॥

द्वैतप्रपञ्चज्ञानं भ्रम एव, इति वेदान्ताभिमताम् इन्द्रजालधारणाम् आह

अतत्त्वमिन्द्रजालाभ-
मिदं सर्वमवस्थितम् ।
किं तत्त्वमिन्द्रजालस्य
इति दार्ढ्याच्छमं व्रजेत् ॥१३३॥

---

पं० १ क० पु० निराकार इति पाठः ।

पं० ४ क० पु० अर्थानुरूपक इति पाठः ।

पं० ५ ख० पु० नित्यत्वादिस्वरूपत इति पाठः ।

पं० ६ ख० पु० कृतार्थः कृतकृत्य इति पाठः ।

अतत्त्वं निस्तत्त्वरूपम्, अत एव इन्द्रजालतुल्यम्। किं तत्त्वं – न किञ्चिदित्यर्थः। अतः सर्वम् इदमिन्द्रजालवत् प्रतीयते, न वस्तुसत् इत्यर्थः ॥ १३३ ॥

---

आत्मनो निर्विकारस्य
क्व ज्ञानं क्व च वा क्रिया।
ज्ञानायत्ता बहिर्भावा
अतः शून्यमिदं जगत् ॥१३४॥

---

बोधात्मकस्य चिदात्मनो निर्विभागत्वेन निर्विकारत्वात् ज्ञानं क्व, क्व च वा क्रिया, ज्ञानक्रिये विकार एव, तदायत्ता बाह्याः पदार्थाः, अतः सर्वम् इदं शून्यमेव ध्यायेत्। यदुक्तं चन्द्रज्ञाने

'अध ऊर्ध्वं दिशः सर्वा भूमिरापोऽनलस्तथा।
वायुश्च खं मनो बुद्धिरहङ्कारश्च ये गुणाः ॥
सर्वं शून्यं निरालम्बं तत्र सर्वं प्रतिष्ठितम्।
यत्किंचित्सकलं भावरूपं तन्त्रेषु वर्णितम् ॥
तदसारतरं चन्द्र मायास्वप्नोपमं स्थितम्।
भ्रान्तिं त्यजस्व वै पुत्र सर्वं शून्ये प्रतिष्ठितम् ॥
शून्यात्प्रवर्तते शक्तिः शक्तेर्वर्णाः प्रजज्ञिरे।
वर्णेभ्यश्च तथा मन्त्रा मन्त्रेभ्यः सृष्टिरव्यया ॥
तस्माच्छून्यं जगद्ध्यायेद्यन्न नश्येत्कदाचन ॥'

इति। अतश्च ज्ञेयकार्यादिरूपं जगदपि न किञ्चित् इति निरूढशुद्धसंविदोऽनुत्तरभावप्राप्तिः। इति शाक्ती भूः ॥ १३४ ॥

---

न मे बन्धो न मोक्षो मे
भीतस्यैता विभीषिकाः ।
प्रतिबिम्बमिदं बुद्धे-
र्जलेष्विव विवस्वतः ॥ १३५ ॥

---

मम चिन्मात्ररूपस्य न बन्धो, मोक्षो वा,—देशकालाद्यपरिच्छिन्नत्वात्, परिच्छिन्नस्यैव बन्धमोक्षभावात्, केवलम् एताः बन्धमोक्षादिकल्पना मायाशक्तिवशात् अपरामृष्टस्वरूपस्य भीतस्यैव

'द्वितीयात् वै भयं भवति'

इति द्वैतत्रस्तस्य, न तु चिदद्वैतपरामर्शशीलस्य विभीषिकाः—चटकभीत्युत्पादनशालिरक्षणार्थाः पलालपुरुषाद्याः । तत्त्वज्ञानिनस्तु किं करिष्यन्ति एताः—अनेन बन्धनम्, इदं न कर्तव्यम्, इदं कर्तव्यम्, अनेनैव मोक्षः, इत्याद्याः कल्पनाः

'निस्त्रैगुण्ये पथि विहरतां को विधिः को निषेधः ।'

इति शुकमुन्युपदेशात् । उक्तं च कल्हणकविना

'शालीन्पलालपुरुषोऽवति यः कृशानु-
दग्धाननश्चटकपेटकभीतिदानैः ।
त्रातुं स एव विहितो विपिने विदध्यात्
किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥

इति । यथा सूर्यस्य बिम्बमेव प्रतीपं जलमध्ये अस्ति, तथा बुद्धिरेव परिमितविषया—बद्धोऽहं मुक्तोऽहम् इत्याकारा प्रतीपा इति

---

पं० २ ग० पु० बालस्यैता इति पाठः ।

मम किम् आयातं, बुद्ध्याद्यवभासकत्वेन तदतीतत्वात् – इति बुद्धिमेव त्यजेत् ॥ १३५ ॥

अन्तःकरणत्यागम् उक्त्वा बाह्यकरणत्यागधारणाम् आह

---

इन्द्रियद्वारकं सर्वं
सुखदुःखादिसंगमम् ।
इतीन्द्रियाणि संत्यज्य
स्वस्थः स्वात्मनि वर्तते ॥१३६॥

---

संबध्यमानसुखदुःखादिमयं सर्वम् इन्द्रियद्वारायातम्, न तु मम चिदात्मनो वास्तवम् इत्यतो हेतोः इन्द्रियाणि परित्यजेत् । इन्द्रियाणाम् एष एव सम्यक् त्यागो – यत् स्वस्थत्वं स्वरूपावस्थितत्वम् ।

' एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः । '

इति उक्तनयेन स्वस्वरूपचिन्मात्रविलासज्ञानम् इन्द्रियाणां स्वस्थत्वं वर्तते । वर्तते इति लिङर्थे लट् । ततश्च आत्मसंस्थ एव तिष्ठेत ॥ १३६ ॥

---

ज्ञानप्रकाशकं सर्वं
सर्वेणात्मा प्रकाशकः ।

---

पं० १४ क० पु० आत्मस्थ इति पाठः ।

एकमेकस्वभावत्वात्
ज्ञानं ज्ञेयं विभाव्यते ॥१३७॥

---

सर्वं प्रकाश्यं वेद्यं वस्तुजातं ज्ञानप्रकाशकम् अस्ति ।
'कृत्यल्युटो बहुलम् ।' ( पा० व्या० ३।३।११३ )

इति ज्ञानपदस्य कर्तरि प्रयोगेन ज्ञानं वेदकात्मा प्रकाशको यस्य तदेवं-विधम् वेदकप्रकाश्यं वेद्यम् इत्यर्थः । वेदकसाध्यं वेद्यत्वम् उक्त्वा वेद्यसाध्यं वेदकत्वम् आह सर्वेणात्मा इति । सर्वेण वेद्य-जातेन आत्मा वेदकः प्रकाशकारी भवति । वेद्यम् ऋते किमपेक्षं वेदकत्वं वेदकस्य, वेदकः इति कस्य वेदकः इत्यर्थः । अतो वेद्य एव जीवितं ददाति वेदकस्य इति । वेद्यत्वं वेदकत्वस्वरूपं, वेदकत्वं वेद्यत्वात्म – एकप्रकृतिकत्वात् । अतो ज्ञानं वेदकं, ज्ञेयं वेद्यम् एकमेव तत्त्वं विशेषेण भावयेत् । यदुक्तं

'यावन्न वेदका एते तावद्वेद्याः कथं प्रिये ।
वेदकं वेद्यमेकं तु तत्त्वं नास्त्यशुचिस्ततः ॥'

इति । किं च

'प्रकाशमानं न पृथक्प्रकाशात्
स च प्रकाशो न पृथग्विमर्शात् ।
नान्यो विमर्शोऽहमिति स्वरूपात्
अहंविमर्शोऽस्मि चिदेकरूपः ॥'

---

पं० ८ क० पु० वेद्ये मृते इति पाठः ।
पं० १० क० पु० ददाति वेदकत्वस्वरूपं वेदकत्वं वेद्यं तु आत्मा इति पाठः ।
पं० १३ क० पु० तावद्वेद्यमिति पाठः ।

इति नीत्या प्रकाशकं ज्ञानं न आत्मनः पृथक्, सर्वशब्दवाच्यं ज्ञेयजातं ज्ञानात् न पृथक् इति ऐक्यं भावयेत् ॥ १३७ ॥

अधुना निर्विकल्पदशाप्राप्त्यर्थं पूर्वोक्तद्वादशोत्तरशतशून्यभूमिषु, एकस्यामपि विश्रान्तानां प्रमातॄणां यावज्जीवं जीवन्मुक्ततायां, देहपाते पुनस्तेषां विदेहमुक्तिः – पारमेश्वरस्वरूपाभेदात् तत्तुल्यता,

'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते ।'

इति उपनिषत्प्रामाण्यात् निष्कलब्रह्मोपासकानां न कुत्रचित् गतागतं पशुप्रमातृषु स्वर्गनिरयगमनमिव, सकलब्रह्मध्यायिषु अर्चिरादिमार्गगमनमिव उत्क्रान्तिरपि तेषां नैव भवेत् । किं तु निष्कलब्रह्मोपासकप्राणानां तप्तकटाहप्रक्षिप्तजलबिन्दुवत् तत्रैव लयो, यत् स्थानम्

'जिज्ञासारहितं शुद्धं निर्विकल्पं परं पदम् ।'

यदाह कठवल्ल्युपनिषत्

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥'

इति परमगतिशब्दप्रतिपादितम् पूर्वोक्तलक्षणभैरवशरीरमेव तेषां स्वतः सिद्धं, न पुनः प्रेत्य बाह्यतिलान्नमध्वादिपिण्डसाधनापेक्षा कार्ममलावृताणुसंघवत्, एतत् सर्वम् अभिप्रेत्य आह

---

## मानसं चेतना शक्ति-
## रात्मा चेति चतुष्टयम् ।

---

पं० २ क० पु० इत्येकमिति पाठः ।

पं० ५ क० पु० देहपातेऽतस्तेषामिति पाठः ।

यदा प्रिये परिक्षीणं
तदा तद्भैरवं वपुः ॥ १३८ ॥

---

मानसं संकल्पात्मकं, चेतना बुद्धिः, शक्तिः प्राणाख्या, आत्मा एतदुपहितः परिमितप्रमाता, एतत् चतुष्टयं यदा परिक्षीणं चिच्चमत्कारम् आपन्नं तदा तत् पूर्वोक्तं भैरवं वपुः 'अन्तः स्वानुभवानन्दा' इत्यादिकम् । यद्येवं तर्हि कर्तृत्वज्ञातृत्वे प्रमीतस्यापि जीवन्मुक्त्यवस्थायामिव कथं न उपलभ्येते,? इति चेत्, रहस्यं शृणु – स्वतन्त्रो नित्यः परमेश्वरः, तस्य एतदेव स्वातन्त्र्यं – यत् देहेन्द्रियादिभिः जीवदशाभ्युपगमे क्रीडनकैः खेलनं कदाचित् स्वस्वरूपविश्रान्त्या बाह्यस्पन्दनं परित्यज्य प्रतिष्ठितस्पन्दाभ्युपगमः सुषुप्त्यादिवत्, पिण्डपातानन्तरं अक्षुब्धा निष्क्रियावस्था हि स्वतन्त्रेण परात्मना अभ्युपगता इत्यतो ज्ञातृत्वाद्यनुपलब्धिः । इयमेव अवस्था श्रीभगवद्गीतासु

'तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ।' ( २।१४ उ० )

इति मालामन्त्रावसरे भैरववपुःस्वरूपा देहान्तरप्राप्तिरेव द्वैपायनेन निर्दिष्टा । उक्तं च भैरवस्रोतसि अनुत्तरभट्टारके

'मृतचेष्टस्य पिण्डस्य न किंचिदुपलभ्यते ।
सुखं दुःखं न चैवास्ति परमानन्दभावनात् ॥
जिज्ञासारहितं स्थानं यत्र देवो निरञ्जनः ।
अकालकलनाहेतुर्गमागमविवर्जितः ॥

---

पं० ९ ख० स्वरूपाविश्रान्त्या इति पाठः ।

पं० ११ क० पु० स्वतन्त्रेणात्मनेति पाठः । ग० पु० परमतेति पाठः ।

पं० १५ क० पु० स्वरूपादेरिति पाठः ।

निरालम्बो निरुत्साहः शून्यभूतः शिवः स्वयम् ।
संज्ञानाशेन निर्जीवसंज्ञा सा व्योमरूपिणी ॥'

तथा तत्रैव देवीं प्रति वचनान्तरम्

'विचरामि न चैकाकी कदाचिच्छून्यरूपता ।
सर्वं सर्वमयश्चाहं तद्रमेऽहं त्वया सह ॥
कदाचिदीदृशं विश्वं दृश्यमेतदितीरितम् ।'

इति । अनेन अभिप्रायेण जैमिनीया अपि अन्त्येष्टिसमये निर्जीवस्यापि पिण्डस्य विष्णुसंबन्ध्येकविंशतिस्नानानि वितरन्ति, अन्यथा

'अविनाशी वा अरे अयमात्मा ।'
'नित्यो नित्यानां ।'
'न जहाति मृतं चापि सर्वव्यापी धनञ्जयः ।'

इत्येवमादीनि वाक्यानि अप्रमाणानि स्युः । तस्मात् पञ्चत्वेऽपि भैरवं वपुः निर्विकल्पमेव, इति न कश्चित् दोषः । जयरथोऽपि एतद्रहस्यनयनिष्ठितानां तीर्थादिकमपि अनुपयुक्तमेवाह, यदुक्तं स्तोत्रे

'बहुलमहसि बोधे प्रोच्छलत्येकरूपे
जननमरणभाषां कातराः कल्पयित्वा ।
अविदितपरमार्थास्तीर्थदेवालयादि-
श्रयणमुपदिशन्तो हन्त नापत्रपन्ते ॥'

इति । तत एतन्मार्गश्रद्धावतां विवेकिनां जीवन्मुक्तिरपि तृणमिव भासते, का कथा पशुदर्शनजीवितभूताया अन्त्येष्टिवार्तायाः, यत् स्तोत्रेऽपि

---

पं० १० क० पु० वा अयमिति पाठः ।
पं० १९ ख० ग० पु० श्रवणमिति पाठः ।

'नयकलनया यस्योद्भूते विवेकपरामृते
तृणमिव न सा जीवन्मुक्तिर्गता गणनीयताम् ।
प्रमयसमये प्रत्यासन्ने स्वसंविदि संस्फुरन्
अभिलषति नैवान्त्येष्ट्याद्याः क्रियाः पशुकल्पिताः ॥'

इति । मृतस्य पिण्डरचनापि उपहास्यैव । यदुक्तं

'प्राग्जन्मकोटिसमुपार्जितदुष्कृतौघ-
खेदावहं कमपि पिण्डमवैति जन्तुः ।
ऊर्ध्वोर्ध्वशासनरतोऽपि गुरुर्मृताय
तस्मै समर्पयति पिण्डमिति प्रमादः ॥'

इति । एतन्नयावलम्बिनो मरणं जीवितं च तुल्यतया इत्याह । मरणं जीवितं च देहस्यैव, न तु आत्मनः

'जीवापेतं वाव किल इदं म्रियते न जीवो म्रियते ।'

इति श्रुतेः । एतन्निस्तरङ्गोपदेशमध्यात् एकयापि धारणया नैश्चल्ये सति, अस्य योगिनो द्विविधा दशा—जीवन्मुक्तिः सति देहे, पिण्डपातानन्तरं तु विदेहमुक्तिः इति । तत्र यावत् जीवावस्थायां मानसादिचतुष्टयं परिक्षीणमेव, सर्वत्र सर्वदा चिन्मात्रावहितत्वेन तच्चमत्कारापन्नत्वात् सर्गस्य, देहपाते तु शान्तबोधाख्यं देहान्तरमेव परमेश्वरस्वरूपत्वात्, न तु अन्यदेहान्तरप्राप्तिरुत्क्रम्यते, नहि सर्वगतस्य आत्मनः उत्क्रान्तिः संभवति । यदुक्तं वीरयामले

'उत्क्रान्तिर्विद्यते यस्य तस्य स्यान्मानकल्पना ।'

मानं परिच्छेदः इत्यर्थः ।

---

पं० ८ क० पु० रतोऽपि दुरो इति ग० पु० सुतो मृताय इति पाठः ।

पं० ९ ख० पु० प्रसाद इति पाठः ।

पं० १३ ग० पु० नैर्मल्ये इति पाठः ।

पं० १९ ख० पु० उत्क्रम्य नहीति पाठः ।

'अमाने शून्यनिर्भासे कस्योत्क्रान्तिः क च क्रमेत् ॥
यदि सर्वगतो देवो वदोत्क्रम्य क यास्यति ।
अथासर्वगतो देवो घटतुल्यस्तदा भवेत् ॥'

इति । इति प्रेत्य मुक्तिः जीवन्मुक्तस्यैव, न तु देहाभिमानिनः कर्मजडस्य, तस्य मलिनवासनाश्रयत्वेन परलोकगमनमेव, श्राद्ध-पिण्डदानादिकं तदुपयोग्येव, यत् देहाभिमानवासना श्रीमदाचार्याभिनवगुप्तपादैः दर्शिता वार्तिके

'अस्ति मे पिण्डदोऽद्याहं पिण्डदानक्रमात्तथा ।
प्राप्नोम्यवयवाभोगं पूर्णदेहोऽस्मि सुस्थितः ॥
अदृष्टक्रियया पुत्रशिष्यस्वात्मादिकॢप्तया ।
स्वर्गभाग्यहमत्यन्तमात्तसद्भोगसुस्थितः ॥
नास्ति मे पिण्डदः कश्चित्स्वयं चास्म्यतिदुष्कृती ।
न मे त्रातास्ति कुत्रापि पतामि नरकार्णवे ॥'

इति । स्वसंवित्स्फार एव तथा तथा स्वर्निरयफलको भ्रान्त्यैव, न तु तत्त्वतः । इति अलम् अप्रकृतेन ॥ १३८ ॥

एतत् उपसंहरति

---

निस्तरङ्गोपदेशानां
शतमुक्तं समासतः ।
द्वादशाभ्यधिकं देवि
यज्ज्ञात्वा ज्ञानविज्जनः ॥१३९॥

---

पं० १३ क० पु० भ्रातास्ति इति, ख० पु० भ्रान्ता इति पाठः ।
पं० १४ क० पु० स्वर्निर्णयफलकः इति पाठः ।

द्वादशाभ्यधिकं शतं द्वादशोत्तरशतम् ॥ १३९ ॥

---

अत्र चैकतमे युक्तो
जायते भैरवः स्वयम् ।
वाचा करोति कर्माणि
शापानुग्रहकारकः ॥ १४० ॥

---

अत्र च एकतमे – एतेषु उपदेशेषु मध्ये एकस्मिन्नपि, युक्तः समाहितः, वाचा, न पुनः प्रयत्नेन इत्यर्थः ॥ १४० ॥

---

अजरामरतामेति
सोऽणिमादिगुणान्वितः ।
योगिनीनां प्रियो देवि
सर्वमेलापकाधिपः ॥ १४१ ॥
जीवन्नपि विमुक्तोऽसौ
कुर्वन्नपि च चेष्टितम् ।

---

श्रीदेवी उवाच

---

इदं यदि वपुर्देव
परायाश्च महेश्वर ॥ १४२ ॥

एवमुक्तव्यवस्थायां
जप्यते को जपश्च कः ।

---

इदम् इति उक्तरीत्या सर्वमयव्यवस्थायां सत्यां, जप्यते को जपश्च कः – भेदस्य अभावात् ॥ १४२ ॥

---

ध्यायते को महानाथ
पूज्यते कश्च तृप्यति ॥१४३॥
हूयते कस्य वा होमो
यागः कस्य च किं कथम् ।

---

महानाथ हे देव ! कस्य वा किमर्थम् ॥ १४३ ॥

श्रीभैरव उवाच

---

एषात्र प्रक्रिया बाह्या
स्थूलेष्वेव मृगेक्षणे ॥ १४४ ॥
भूयो भूयः परे भावे
भावना भाव्यते हि या ।

---

प्रक्रिया जपादिका । परे भावे विश्वपूरणे स्वस्वभावे या भावना विमर्शना

'अहमेव परो हंसः शिवः परमकारणम्'
(स्व० ४ प० श्लो० ३९५)

इत्यादिरूपा भाव्यते संपाद्यते ॥ १४४ ॥

जपः सोऽत्र स्वयं नादो
मन्त्रात्मा जप्य ईदृशः ॥१४५॥

स एव नादः अकृतकाहंविमर्शात्मा जपनीयो देवः । या भावना निष्पाद्यते स जपः इति अन्वयः । जप्यम् आह स्वयं नादो मन्त्रात्मा इति

'पृथङ्मन्त्रः पृथङ्मन्त्री न सिध्यति कदाचन ।'

इति न्यायात् । अत्र सूक्ष्मवस्तूपदेशमये शास्त्रे ॥ १४५ ॥

ध्यानं हि निश्चला बुद्धि-
र्निराकारा निराश्रया ।
न तु ध्यानं शरीराक्षि-
मुखहस्तादिकल्पना ॥ १४६ ॥

निश्चला प्ररूढा, निराकारा नानोल्लेखशून्या, निराश्रया कन्दहृद्द्वादशान्ताद्याश्रयहीना ॥ १४६ ॥

अपरत्र बाह्योपकरणपूर्वा पूजा, अस्मिन् दर्शने तु निर्विकल्पदिव्यपदावेशात् अन्यत् न अर्चनम् इत्याह

पूजा नाम न पुष्पाद्यै-
यो मतिः क्रियते दृढा ।
निर्विकल्पे परे व्योम्नि
सा पूजा ह्यादराल्लयः ॥१४७॥

---

महाव्योम्नि परचित्प्रकाशे, आदरात् श्रद्धाप्रकर्षात्, यो लयो विश्रान्तिः, सा यस्मात् पूजा तस्मात् पुष्पाद्यैः नाम न पूजा ॥ १४७ ॥

---

अत्रैकतमयुक्तिस्थे
योत्पद्येत दिनाद्दिनम् ।
भरिताकारता सात्र
तृप्तिरत्यन्तपूर्णता ॥ १४८ ॥

---

एकतमयुक्तिस्थे योगिनि इति शेषः ॥ १४८ ॥

---

महाशून्यालये वह्नौ
भूताक्षविषयादिकम् ।
हूयते मनसा सार्धं
स होमश्चेतनास्रुचा ॥ १४९ ॥

---

महाशून्यस्य शून्यातिशून्यपदस्य आ समन्तात् लयो यत्र परतत्त्वात्मनि वह्नौ, तत्र भूतेन्द्रियविषयभुवनतत्त्वादिरूपं सकलं जगत्, तद्विभागकल्पनाहेतुना सह, चेतना विश्वानुसंधात्री शक्तिरेव स्रुक् तया हूयते यत्, स होमः अग्नौ हविर्दानम् इत्यर्थः ।

'चितिः स्रुक् चित्तमाज्यम् ।'

इत्यादिश्रुतिः । स होमः स्रुक् च चेतना इति पाठान्तरम् ॥१४९

यागोऽत्र परमेशानि
तुष्टिरानन्दलक्षणा ।

यागो देवपूजा ॥

क्षपणात्सर्वपापानां
त्राणात्सर्वस्य पार्वति ॥ १५० ॥
रुद्रशक्तिसमावेश-
स्तत्क्षेत्रं भावना परा ।
अन्यथा तस्य तत्त्वस्य
का पूजा कश्च तृप्यति ॥१५१॥

पशुप्रमातुः, रुद्रप्रमातॄणां पतिरूपाणां या शक्तिः अनाश्रिताख्या तस्याम् समावेशः तन्मयीभवनं तदेव क्षेत्रम् इति अन्वयः । हेतुरूपेण क्षेत्रपदं निर्वक्ति – क्षपणात् इति । तत् क्षेत्रं न पुनः कुरुक्षेत्रादि ॥ १५१ ॥

पं० २ क० पु० रूपं विषयं जगदिति । ख० पु० रूपं विश्वं सकलमिति पाठः ।

यागक्षेत्रादि किम् कथम् इति देवीप्रश्नविषये आदिशब्दग्राह्यं स्नानमपि निर्दिशति

स्वतन्त्रानन्दचिन्मात्र-
सारः स्वात्मा हि सर्वतः ।
आवेशनं तत्स्वरूपे
स्वात्मनः स्नानमीरितम् ॥१५२॥

स्वात्मस्वरूपे आवेशनमेव मुख्यं स्नानम् इति भावः ॥१५२॥

यैरेव पूज्यते द्रव्यै-
स्तर्प्यते वा परापरः ।
यश्चैव पूजकः सर्वः
स एवैकः क्व पूजनम् ॥१५३॥

यैः इति कुसुमादिभिः अलिबलिपिशितादिभिश्च । परापरः इति परादेव्या सहितः परः परमेश्वरः । अतः क्व पूजनम् उक्त-पारमार्थिकपूजाव्यतिरेकेण न किंचित् अन्यत् पूजनादि इत्यर्थः ॥ १५३ ॥

व्रजेत्प्राणो विशेज्जीव
इच्छया कुटिलाकृतिः ।

पं० १ क० ग० पु० यागक्षेत्रादि इत्यारभ्य स्नानमित्यन्तः पाठो नास्ति ।

दीर्घात्मा सा महादेवी
परक्षेत्रं परापरा ॥ १५४ ॥
अस्यामनुचरन् तिष्ठन्
महानन्दमयेऽध्वरे ।
तया देव्या समाविष्टः
परं भैरवमाप्नुयात् ॥ १५५ ॥
षट् शतानि दिवा रात्रौ
सहस्राण्येकविंशतिः ।
जपो देव्याः समुद्दिष्टः
प्राणस्यान्ते सुदुर्लभः ॥ १५६ ॥

---

'ऊर्ध्वे प्राण' इति सकार-हकारजपात्मिकां परां देवीम् उपक्रान्ताम् 'होच्चारं मनसा कुर्वन्' इति हंसोच्चारं मनसा कुर्वन् शान्ते प्रलीयते इति मध्ये अभिहितां, पुनः सर्वेषु श्लोकेषु चतुर्थचरणेषु फलभूतां शून्यभूमिं प्रज्ञापारमितां निर्विकल्पावस्थां श्लोकत्रयेण अन्ते उपसंहरति,—व्रजेत्प्राण इत्यादि । प्राणः 'सः' इत्येवंरूपः प्रकाशो व्रजेत् बहिः निःसरेत्, जीवः 'अहम्' इत्येवंप्रकारः क्षपारूपः, प्राणस्य बहिर्निःसरणे अपानस्य अन्तःप्रवेशने जीवात्मता संभवति इति संभावनायां लिङ् । जीवस्य

पं० १ ग० पु० परादेवी इति पाठः ।

पं० १६ क० पु० निःसारयेदिति पाठः ।

प्राणान्तर्वर्तित्वात्, प्राणस्य हकारलिपिवत् कुटिलाकृतित्वात् जीवोऽपि कुटिलः, प्रत्यावृत्य अन्तःप्रवेशाभावे जीव एव न स्यात् इति अपानदशैव जीवप्रादुर्भावः इत्यतो 'विशेत् जीवः' इति उक्तम् । वक्रत्वमपि तस्य स्वतन्त्रपरमेशेच्छयैव । कुण्डलिन्या अधोमुख्याः सार्धत्रिवलयाकारत्वात् तदन्तःस्था प्राणशक्तिरपि कुटिला । प्राणान्तर्वर्ती आकाशो बालाग्रशतभागानाम् अन्तिमो भागः परमसूक्ष्मो निराकृतिः । आधारवक्रतया आधेयस्यापि उपचारात् वक्रत्वम्, न तु तत्त्वतः इति प्राण एव कुटिलः । हृदयाकाशसंविन्मात्रात् जीवदशोद्भूतिः

'प्राक् संवित्प्राणे परिणता ।'

इति श्रुतेः । पूर्णाहंविमर्शसंविन्मात्रात् न्यूनदेहाभिमानि जीवत्वम्, महाकाशत्वे सति घटाद्याकाशोद्भूतिवत् । इडायां वामनाड्यां संवलनात्, पिङ्गलायां दक्षनाड्यां वलनात् प्राणशक्तेः द्विवलयाकारत्वं । सुषुम्नाख्या मध्यनाडी तु सार्धमात्रात्मकत्वात् सार्धा । प्राणस्य हृदाकाशात् आरोहणेन प्राणात्मकतया 'हम्' इति, द्वादशान्तात् अवरोहणेन अपानदशया 'स' इति वर्णद्वयोत्पत्तिः । जीवस्य जीवत्वमेतद्वर्णद्वयव्यक्तभाषणेन

'हंस-हंसेति मन्त्रेण जीवो जपति सर्वदा ।'

इति, उक्तत्वात् जीव एव जपति, न तु परमेश्वरः--हंस इति मन्त्रेण न्यूनाभिमानघटनात्, ईश्वरदशायां तु पूर्णाहन्तात्मकतया 'अहं

---

पं० १ ग० पु० प्राणानुवर्तित्वादिति पाठः ।

पं० १५ आरोहणेन द्वादशान्तादवरोहणेन प्राणात्मकतया अहमिति अवरोहणेनेति एवंविधः पाठः सर्वत्रादर्शपुस्तकेषु ।

पं० १६ ख० पु० दशाया इति पाठः ।

पं० १८ ख० पु० मन्त्रं तु इति पाठः ।

पं० २० क० पु० अहमः इति पाठः ।

सः, सोऽहम्, अहम् इदम् इत्यादिविमर्शोच्छुरितत्वात् इदं त्याज्यम्, इदम् उपादेयम्, इदं मम, न इदं मम इति हान-समादानधर्मित्वात् हंसत्वम् । एवं चिदर्करश्मिविकासे दिनप्रकाशः प्राणः, तत्संकोचेन रात्रिरपानः । एवं स-हयोः धर्माधर्मयोः, दीर्घ-ह्रस्वयोः, दिनक्षपयोः, अग्नीषोमयोः मूलभूता हृदाकाशसंवित् शून्यभूमिः परा देवी विज्ञानतन्त्रे सर्वसाधारणा फलभूता निर्दिष्टा । एतस्या विततरूपत्वं दर्शयति 'दीर्घात्मा सा महादेवी परक्षेत्रं परापरा ।' इति । सा महादेवी महदम्बरैकप्रकाशस्वरूपा संविद्गगनचरी प्रमातृप्रमेयप्रमाणगामिनी 'स-ह'-इति वर्णद्वयसत्ताप्रदा तद्विश्रान्तिभाजनं, तन्मूर्धाकाशस्थत्वात् तटस्थरूपत्वेन स्थिता तत्पार्श्वस्थान्तर्बहिष्करणविसर्गकर्त्री अजपा – अव्यपदेश्यापि सती वितताकृतिर्भवति । तस्या एव विस्तारो द्वैतसंपत्तिर्दिनक्षपात्मिका । सैव परं क्षेत्रं सर्वपाशानाम् क्षपणात्, सर्वस्य त्राणात् तीर्थभूमिर्वा सा, न तु कुरुक्षेत्रादि क्षेत्रम् । इयं परापरा दशा – भेदाभेदात्मकतया अहम् इति प्राधान्येन, इदम्-इति गुणीकारेण, अर्थतः तच्छब्दास्मच्छब्दयोः अभेदः, तत्तया मत्तया निर्देशेन भेदश्च इति परापरात्वम् । स्फुटवाच्यहकार-सकारान्तगर्भिता परा देवी अन्तः प्रवेशदशायां हं-कारस्य मस्तकोर्ध्वे

'अम् इत्यनुस्वारः ।'

इति कृतलक्षणानुस्वाररूपा केवलबिन्दुतया अजप्या । एवं बहिः निःसरणदशायां सः-कारपार्श्वे

---

पं० १४ क० पु० परापरदशा-इति पाठः ।

पं० १७ ख० पु० परापरात्वमिति पाठः ।

पं० २१ क० पु० आप्येति पाठः ।

'अः इति विसर्जनीयः ।'

इति कृतलक्षणविसर्जनीयात्मिका अकारं विना बिन्दुद्वयस्य अनुच्चार्यत्वात् अजपा । एवं वर्णक्रमेण अजपात्वम् । संवित्क्रमेण तु संवित्प्रकाशेन सर्वशब्दस्फुरणम् । तत्स्फुरणं तु न केनचिदपि संभवति – संविदन्तराभावेन स्वप्रकाशत्वात्, स्वप्रकाशस्य च परप्रकाशानपेक्षत्वात् प्रदीपस्य प्रदीपान्तराभाववत् । ननु जीवोऽस्ति हंसमन्त्रजीवः, तन्मन्त्रमात्रविमर्शानुसरणेन तस्य पूर्णाहंविमर्शः कथं जायते,? इति चेत् ब्रूमः – अत्राहुः महेश्वरानन्दपादाः

'यदि निजहृदयोल्लासं
 निर्णेतुं नित्यनिष्कलमिच्छा ।
मध्यत्रुटिस्त्रुटितव्या
 अस्तङ्गतयोः सोमसूर्ययोस्तर्हि ॥'

इति । सोमः अपानो – हकारः सकलवेद्यवर्गपोषकत्वात्, ज्ञातृत्वात् सकारात्मा सूर्यः हंकार-सः कारयोः अस्तङ्गतयोः सतोः मध्यत्रुटिः उद्धर्तव्या – माणिक्यमालिन्यादिवत् । सकारस्य अस्तङ्गमनं स्वहृदये विसर्जनीये हकारस्य च स्वहृदयसंपुटीकरणलक्षणे अनुस्वारे यदा विश्रान्तिः तदा मध्यमा त्रुटिः – विभज्यावस्थानक्षणलक्षणो यः कालखण्डः स उत्त्रुटितव्यः, तदानीम् 'अहं सः' इति विमर्श उत्पद्यते । हंसमन्त्राश्लिष्टः अहं सः, सोऽहम् इति महामन्त्रः, स एव विमृष्टव्यः स्वात्मप्रत्यभिज्ञानोपायत्वात् ।

पं० २ क० पु० अंकारमिति पाठः ।

पं० १६ ख० पु० संपुटीकारोति पाठः ।

पं० १९ क० पु० विसर्गः उत्पद्यते इति पाठः ।

जयरथस्तु – स-हाभ्यां – सकार-हकाराभ्यां जातो जपः सहजोऽकृत्रिमः ।

‘ स-हौ क्षपादिनामानावधरोत्तरचारिणौ ।
परस्परद्वेषरतौ मत्तौ नागहुडोपमौ ॥
कस्तौ रोधयितुं शक्तो वीर्यं मुक्त्वास्वरं महत् । ’

इति । अत्र क्षपादिनामानौ इति क्षपा-दिनाभ्याम् आ समन्तात् मननं ज्ञानं ययोः इति यथाक्रममपानस्य प्राणस्य च क्षपया दिनेन च शास्त्रीयो व्यपदेशः । यदाशयेन वीरावलिकुले

‘ सितासितौ दीर्घह्रस्वौ धर्माधर्मौ दिनक्षपे ।
क्षीयेते यदि तद्दीक्षा व्याप्त्या ध्यानेन योगतः ॥ ’

इति । शुक्लो दिनम्, कृष्णा रात्रिः । प्रकाशविकासेन दिनस्य दीर्घता, तत्संकोचेन रात्रिर्ह्रस्वा । वेदोक्तविध्यधिकारबाहुल्यात् धर्मत्वं दिनस्य, रात्रेस्तु तदनधिकारात् अधर्मता । त्रयीतनुत्वं सूर्यस्यैव, न तु चन्द्रस्य । कुम्भकावस्थया प्राणापानयोः प्रशान्तिः योगिनाम् अभीष्टैव, अत एव क्षीयेते तौ इति उक्तम् । अन्यथा हि वृथायुर्हरणम् अनवरतजन्ममरणप्रवाहकारणं विदध्यातां । श्रुतिस्मृतिषु तु दिनक्षपयोः श्वत्वेन निर्देशः कृतः, मृत्युदूतत्वात् आयुर्हरणात् जनहिंसकत्वाच्च । तथा च ब्राह्मणम् ।

‘ एतौ वै यमश्वौ यमस्य श्वानौ यदहोरात्रे ताविदं
मनुष्याहरणावन्तःप्राणप्रवेशेनोपसृजन्तौ प्रवहतः । ’

इति । तथा यमसूक्तं च

‘ यौ ते श्वानौ यम रक्षितारौ
चतुरक्षौ पथिरक्षी नृचक्षसौ ।

---

पं० ७ क० पु० अपारस्येति पाठः ।

पं० ११ ग० पु० शुक्लो दिनमित्यत आरभ्य पशुवासनाक्षयश्चेति ।दिक् इत्यन्तः पाठः पर्यायरूपेण बहिः प्रक्षिप्तः ।

ताभ्यामेनं परिदेहि राजन्
स्वस्ति चास्मा अनमीवं च देहि ॥
उरूणसावसुतृपा उदुम्बलौ
यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय
पुनर्दातामसुमद्येह भद्रम् ॥ '

चतुरक्षौ चतुरपरिवर्तिनौ – दिनात् अनन्तरं रात्रिः तस्या अनन्तरं दिवसः इति, एवम् अविच्छिन्नपरिवर्तिनौ इत्यर्थः । शकन्ध्वादिवत् चतुरक्षौ इति रूपम्, चतुरं निपुणं चक्रभ्रमणं ययोः तौ इति विग्रहः, चक्रवाचको हि अक्षशब्दः, चक्रेण परिवर्तनं लक्ष्यते, चतुरचक्रौ

' श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रदास्यामि स्यातां मे तावहिंसकौ ॥ '

इति कपिशवर्णः श्वा रात्रिः, चित्रवर्णः श्वा दिनं, प्रातःकाले रक्तप्रकाशे, मध्याह्ने शुक्लतायां, सायं श्यामत्वेन, कर्बुरवर्णत्वात् दिनस्य । वैवस्वतोऽत्र मृत्युः तद्गृहोत्पन्नत्वात् तद्रक्षकत्वात् जनायुर्हरणात् मृत्युदूतौ, तदर्थं पाञ्चभौतिकं पिण्डमेव पिण्डं कवलं दास्यामि – ममतायाः त्यजामि । शुनो हि भक्तादिपिण्डदानं लोके ख्यातम्, अहोरात्रिपरिवृत्त्या भौतिकपिण्डस्य संजातजीर्णभावस्य क्षतिः इत्यतः – पिण्डं प्रदास्यामि इति उक्तम् । मम पुनः चिद्रूपस्य अविनाशिन एतद्गतिपरिवर्तनस्य अङ्गीकृतप्राणापानगतिविच्छेदे तौ श्वानौ हिंसकौ न भवेताम्, तत्कृतं हिंसनं न संभवति, इति संभावनायां लिङ् । शुनः सकाशात् अवश्यं तद्विरचितदंश-

पं० १७ ग० पु० तदर्थं भौतिकमिति पाठः ।
पं० १९ ग० पु० जीवभावस्येति पाठः ।

ननिराकरणेन स्वात्मरक्षणं विधेयम् । तस्मात् योगेन ध्यानेन यदि तौ क्षीयेते तदा दीक्षा, – ज्ञानसद्भावः पशुवासनाक्षयश्च, इति दिक् । अस्वरं पुनः निर्विभागा पश्यन्ती भूमिः इति केचित् आमनन्ति । यत् आदिष्टं श्रीवामननाथेन

'अप्राणमस्वरं ध्यात्वा पश्यन्त्या निर्विभागया ।
चिन्मात्रस्पर्शयोगेन विलीनः स्यात्परे पदे ॥'

इति । अस्यापि मूलभूः

'ततोऽस्वरोऽर्कसोमाग्निकलाबीजप्रसूतिभाक् ।
उदेत्येकः समालोकः प्रमाणार्थप्रमातृगः ॥'

इति । अर्थः प्रमेयम् इति श्रीक्रमस्तोत्रसंवादात् अपादानत्वेन परैव देवी देशकालाकारावच्छेदविनाशिनी समालम्भनीया । एषैव भगवती निरावरणरूपा प्रज्ञापारमिता इति उच्यते तत् उक्तं

'निष्प्रपञ्चा निराभासा निर्विकल्पा निरामया ।
निःस्वभावा परा सूक्ष्मा बिन्दुनादविवर्जिता ॥
प्रज्ञापारमितापारा सर्वबुद्धोदया परा ।'

इति । इयमेव शून्यभूमिः विज्ञानतन्त्रे परमशिवेन उपदिष्टा सर्वत्र, अन्यदर्शनेषु शून्यावस्थाया मोक्षत्वं प्रतिपाद्यते । भावनाबलेन यः साक्षात्कारः स शैवशास्त्रेषु मायागर्भपरिभ्रमणमेव इति निश्चिनुमः, इति अलम् । अस्यां परापराभूमौ सकार-हकारसंघट्टात्मको

पं० ३ क० पु० अम्बरमिति पाठः ।
पं० ५ क० पु० अम्बरमिति पाठः ।
पं० ६ क० पु० पदे पदे इति पाठः ।
पं० ८ क० पु० ततोऽम्बर इति पाठः ।
पं० ११ क० पु० संभावनीया इति पाठः ।
पं० १९ क० पु० घट्टात्मके इति पाठः ।

य आनन्दः स महानन्दः तन्मये यज्ञे 'सोऽहम्' इति विमर्शरूपे अनुचरन् तिष्ठन् – तया पश्यन्त्या सह एकीभूतः सन् परास्वरूपो भवेदेव इत्यर्थः । 'हंस' इति मन्त्राणाम् अहर्निशं यावती संख्या जायते तत् दर्शयति – षट् शतानि इति । सुदुर्लभः इति – अजपाजपविमर्शनं प्राणनिर्याणसमये बहुतरजन्मार्जितपुण्यातिशयेन लभ्यते इति शिवम् ॥ १५६ ॥

---

इत्येतत्कथितं देवि
परमामृतमुत्तमम् ।
एतच्च नैव कस्यापि
प्रकाश्यं तु कदाचन ॥ १५७ ॥
परशिष्ये खले क्रूरे
अभक्ते गुरुपादयोः ।
निर्विकल्पमतीनां तु
वीराणामुन्नतात्मनाम् ॥१५८॥

---

निर्विकल्पमतित्वादेव वीराणां छिन्नसंशयशत्रूणाम्, उन्नतः शुद्धविद्याप्रधानो न तु मायापतितः आत्मा येषाम् ॥ १५८ ॥

---

भक्तानां गुरुवर्गस्य
दातव्यं निर्विशङ्कया ।

---

पं० १ क० पु० आनन्दमहानन्द इति पाठः ।

पं० २ क० पु० अनुसरन् इति पाठः ।

पं० १६ क० पु० मायाद्यापतित इति पाठः ।

ग्रामो राज्यं पुरं देशः
पुत्रदारकुटुम्बकम् ॥ १५९ ॥

---

तत्त्वोपदेशकस्य देहमात्रकृतभेदस्य, वस्तुतः शिवैकरूपस्य गुरोः, न तु नियतस्यैव कस्यचित्, भक्तानां निर्विशङ्कं प्रकाशनीयम् ॥ १५९ ॥

---

सर्वमेतत्परित्यज्य
ग्राह्यमेतन्मृगेक्षणे ।
किमेभिरस्थिरैर्देवि
स्थिरं परमिदं धनम् ॥१६०॥

---

ग्राह्यम् इति आत्मीकार्यम् । स्थिरं धनम् इति सर्वदौर्गत्यहरत्वात् ॥ १६० ॥

---

प्राणा अपि प्रदातव्या
न देयं परमामृतम् ।

---

श्रीदेवी उवाच

---

देवदेव महादेव
परितृप्तास्मि शंकर ॥ १६१ ॥

रुद्रयामलतन्त्रस्य
सारमद्यावधारितम् ।
सर्वशक्तिप्रभेदानां
हृदयं ज्ञातमद्य च ॥ १६२ ॥

इत्युक्त्वानन्दिता देवी
कण्ठे लग्ना शिवस्य तु ॥ १६३ ॥

---

सर्वसंशयत्यागपूर्वं परमानन्दपदप्रवेशेन शिवैकमयीभूता – इति भावः ॥ १६३ ॥

श्रुतं देव मयेत्यादिप्रश्नग्रन्थार्थबन्धनम् ।
ऊर्ध्वे प्राणादिपद्यान्तं क्षेमराजकृतं शुभम् ॥
ततः परमुपाध्यायकुशकाशावलम्बनम् ।
यद्वृत्तिग्रन्थकाकलपुस्तकं हस्तगोचरम् ॥
भूर्जात्मकं वा नायातं जग्धं कालघुणेन तत् ।
दग्धं वा वह्निना च्छिन्नमत्र साक्षी महेश्वरः ॥

---

विज्ञानतन्त्रविवृतिः कृतसंग्रहेयं
वृत्त्यन्तरात्क्वचिदपि स्वमतेर्विलासात् ।
नाम्ना शिवेतिगुणिकौशिकगोत्रजात्यो-
पाध्यायशब्दयुतयाप्युपलक्षितेन ॥

---

पं० ७ क० पु० आनन्दप्रवेशेनेति पाठः ।

सुखजीवनाभिधाने रक्षति काश्मीरमण्डलं नृपतौ ।
अगमन्निःशेषत्वं विज्ञानोद्योतसंग्रहः सुगमः ॥ ९ ॥

समाप्तोऽयं विज्ञानभैरवोद्द्योतः

कृतिः श्रीमद्गोविन्दगुरुसुन्दरकण्ठपादपद्मानु-
जीविनः शिवोपाध्यायस्य इति शिवम् ॥

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रस्रष्टापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनाम् ॥ ३ ॥ तिलकम् ॥

श्रीशिवार्पणमस्तु ॥

KASHMIR SERIES OF TEXTS
AND STUDIES.

No. IX.

# THE VIJÑĀNA-BHAIRAVA

WITH COMMENTARY CALLED KAUMADI

BY

ĀNANDA BHAṬṬA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
**SIR PRATĀP SINGH SĀHIB BAHĀDUR,**
G. C. S. I., G. C. I. E.,
**MAHĀRĀJA** OF JAMMU AND KASHMIR STATE.

BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.

---

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९

# श्रीविज्ञानभैरवः

श्रीमत्पण्डितानन्दभट्टविरचित–विज्ञानकौमुद्याख्यदीपिकोपेतः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

**प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये**

**तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा**

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

**मुम्बय्यां**

तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः

THE RESEARCH DEPARTMENT JAMMU & KASHMIR STATE

संवत् १९७५ ख्रैस्ताब्दः १९१८

**काश्मीर-श्रीनगर**

अथ

## विज्ञानभैरवोद्योते प्रथमपरिशिष्टम् ।

### मूलश्लोकानामकाराद्यनुक्रमणिका

---

इति विज्ञानभैरवे मूलश्लोकानामकाराद्यनुक्रमणिका समाप्ता ॥

अथ

## विज्ञानभैरवोद्योते द्वितीयपरिशिष्टम् ।

### संवादितप्रमाणवाक्यानामकाराद्यनुक्रमणिका

---

| प्रमाणप्रतीकं | | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|---|
| अकारान्तः परं सूक्ष्मं | .... | ७८ | ........ (?) |
| अकिंचिच्चिन्तकस्येति | .... | १९ | मालिनीविजयः |
| अकिंचिच्चिन्तकस्यैव | .... | १९ | मालिनीविजयः |
| अखण्डैकरसं वस्तु .... | .... | १०० | वाक्यसुधा |
| अग्निसंज्ञस्ततश्चोर्ध्वं .... | .... | ५८ | कुलाम्नायः |
| अज्झलाद्याश्च ये वर्णाः | .... | ७८ | ........ (?) |
| अतस्तत्परमं तेन .... | .... | ११७ | पञ्चदशी |
| अत्र नाथः समाचारं | .... | १०४ | ........ (?) |
| अत्र प्रकाशमात्रं यत् | .... | ८० | ज्ञानामृतरसायनं |
| अदृष्टविग्रहाच्छान्तात् | .... | ३ | ........ (?) |
| अनन्तं सुरवर्त्म खम् | .... | ११५ | अमरकोशः |
| अनुत्तरं परं धाम .... | .... | ८१ | ज्ञानामृतरसायनं |
| अनुत्तरस्याकारस्य.... | .... | ८० | ........ (?) |
| अनुत्तरस्वभावत्वात् | .... | ८० | ........ (?) |
| अन्तर्लक्ष्यो बहिर्दृष्टिः | .... | २५ | ( वासिष्ठम् ) |
| अपरोक्षे भवत्तत्त्वे .... | .... | १०९ | संवित्प्रकाशः |
| अपानेऽस्तं गते प्राणो | .... | २१ | ( वासिष्ठम् ) |

---

इति विज्ञानभैरवे ग्रन्थान्तरेषु संवादितप्रमाणवाक्यानामकाराद्यनुक्रमणिका समाप्ता ॥

---

समाप्तं द्वितीयपरिशिष्टम् ।

ओं नमश्चिद्भैरवात्मने शंकराय

अथ

# विज्ञानभैरवः

श्रीमद्भट्टानन्दविरचितविज्ञानकौमुदीटीकोपेतः ।

श्रीविद्यां श्रीकण्ठमूर्तिं महेशं
सोमानन्दं भूतिराजोत्पलेशौ ।
कालेनास्तंयातशैवागमानां
प्रोद्धृत्यै ये मर्त्यलोकेऽवतीर्णाः ॥ १ ॥

नामं नामं तत्पदाम्भोजरेणुं
वाक्कायान्तर्वृत्तिभिर्मुक्तपङ्के ।
चित्तादर्शे मादृशा दृष्टतत्त्वा-
वेशाः शोभन्तेऽनिशं सत्सदःसु ॥ २ ॥
(युगलकम्)

श्रीलक्ष्मणाभिनवगुप्तमुखांस्त्रिकार्थ-
तत्त्वानुशासनमहाम्बुधिशीतरश्मीन् ।
ध्यात्वा गुरूञ्जडहृदब्जविकासनोद्य-
द्भास्वत्प्रभान्वितिमिरीकृतविश्वमार्गान् ॥ ३ ॥

शर्वाननाम्बुजविनिःसृतधारणानां
गूढाशयेऽपरविभानवलोकनेन ।
संरच्यते प्रतिपदं स्खलतापि तावद्-
विज्ञानभैरवनये पददीपिकेयम् ॥ ४ ॥
(युगलकम्)

तदिह शास्त्रकृत्स्वयं भैरवः नीलपीतादिविचित्राभिरान्तरबाह्यस्वरूपाभिः तत्तदर्थक्रियाभिः स्वात्मानमाच्छाद्य, ततश्च सूर्यमरीचिनिकरवत् बहिर्निःसृता भक्तजना एतज्ज्ञानमार्गद्वारा स्वात्मस्वरूपोपलब्ध्या पुनः प्रविशन्तु तदैक्यमुपयान्तु च, इति प्रयोजनमुद्दिश्य स्वविज्ञानस्फारज्ञान-क्रियादिशक्तिद्वारा प्रष्टृरूपात्मना आह

## श्रीभैरव्युवाच ।

इत्यादि

श्रुतं देव मया सर्वं यामलादिषु भाषितम् ।
त्रिकभेदमशेषेण सारात्सारविभागशः ॥ १ ॥

अद्यापि न निवृत्तो मे संशयः परमेश्वर ।
किं रूपं तत्त्वतो देव शब्दराशिकलात्मकम् ॥२॥

किं वा नवात्मभेदेन भैरवे भैरवाकृतौ ।
त्रिशिरोभेदभिन्नं वा किं वा शक्तित्रयात्मकम्॥३॥

नादबिन्दुमयं वापि किं चन्द्रार्धनिरोधकम् ।
चक्रारूढमनच्कं वा किं वा शक्तिस्वरूपकम् ॥४॥

परापरायाः सकलमपरायाश्च वा पुनः ।
पराया यदि तद्वत्स्यात्परत्वं तद्विरुध्यते ॥ ५ ॥

नहि वर्णविभेदेन देहभेदेन वा भवेत् ।
परत्वं निष्कलत्वेन सकलत्वेन वा भवेत् ॥ ६ ॥

प्रसादं कुरु मे नाथ निःशेषं छिन्धि संशयम् ।

तत्र यत्किंचित् यामलादिषु शिवशक्तिसंघट्टनात्महेतुषु शास्त्रेषु ब्रह्मविष्णुरुद्रभैरवाख्ययामलेषु तदाख्येषु आगमेषु यत्किंचित् भवन्मुखात् श्रुतं तदैक्योपपत्त्या श्रुतपूर्वमेवास्ति, दर्पणप्रतिबिम्बितन्यायेन तदनतिरिक्तं तदतिरिक्तं वा आन्तरतश्चैक्यतया बाह्यतश्च त्रिकभेदनरशक्तिशिवात्मकतया वा, इत्यनेनासाधारणतया साधारणतया च श्रुतं श्रुतपूर्वमेवास्ति । इदानीमपि मम संदेहो न निवर्तते । मम भैरवीस्वरूपेण मायादिशक्तिस्वरूपे तदाख्यानतया तत्स्वरूपतादात्म्यात् मम भैरवीति नाम गीयत इत्यर्थः । तस्या मम न संदेहनिवृत्तिः – इदानीमपि न मम त्वदैक्योपपत्तिः संजातेति भावः । स्वात्मभित्तिसंलग्नत्वेन तदुल्लासाद्विश्वभर्त्री, विश्वमयत्वेनैव सर्वत्र स्फुरणात्तद्भ्रियमाणा वा, संसारभीरूणामभयप्रदत्वेन हितकर्त्री, भिया संसारत्रासेन रवतां जनितपरामर्शरूपाक्रन्दवतां हृद्भूमौ स्फुरन्ती वा इत्यादि निरुक्तनिर्दिष्टार्था 'भैरवी' इत्युच्यते । तदेतत्सर्वम्, प्रश्नोत्तरतत्त्वनिर्णयं, भैरवीभैरवयोः सामरस्यात्मसंघट्टयामलस्वरूपप्रतिपादनं च तन्त्रालोकपरात्रिंशिकादौ वितत्य प्रोक्तं नास्माभिरिह वितन्यते रहस्यतस्करताप्रसङ्गात् । प्रकृतमनुसरामः – तस्य चानुत्तररूपस्य किं रूपं तत्त्वतः सत्यतः, तदेव वदेति भावः । तत्र किं शब्दराशिकलात्मकं शब्दब्रह्मात्मकं

'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।'

इति । अथ वा अकारादि-क्षकारान्तशब्दतया, अहमिति स्वरूपतया च वा, अ-क्ष इत्यात्मतया चेति, किं वा नवतत्त्वात्मतया नववामादिशक्तिस्वरूपतया च, भैरवे सच्चिदानन्दलक्षणपूर्णाहं-

भावस्वरूपभूते भैरवाकृतौ पञ्चकृत्यस्वभावभूते चित्तत्त्वे वा, नरशक्तिशिवात्मना त्रिशिरोभेदभिन्नं वा तत् तत्त्वं मातृमानमेयादिव्यापारत्रयात्मना वा, इच्छादिशक्तित्रयव्यापारात्मना च वा, नादबिन्दुमयेन शिवशक्त्यात्मकशब्दप्रत्ययरूपज्ञानक्रियाशक्त्यात्मना वा, प्रणवाङ्गामाख्यार्धचन्द्रनिरोधात्मकव्यापारेण वा, षट्चक्रादिचक्रस्थितं किंचित्तत्त्वं कुण्डलिन्याकृतिसार्धत्रिवलयस्फुरितं वा, अकारादिक्षकारान्तचक्रारूढस्वभावम् अहमिति स्फुरणं वा, अनक्कम् अकारादिषोडशस्वरराहित्येन ककारादिक्षकारान्तरूपं क् ख् ग् घ् ङ् इत्यादि स्वरूपं वा, अथ च ओं नमः श्रीविद्यापादुकाभ्यः, इत्येवं स्वरव्यञ्जनसंयुक्तं रूपम् उच्चारवर्जितं निष्कलं रूपम् 'अ उ म् न् अ मः श् र् ई व् इ द् य् आ प् आ द् उ क् आ भ् यः' इत्येवं रूपं वा तत् सर्वं वद, वा पराया वाचः स्वरूपं, वा अपराया वाचः स्वरूपं, वा परापराया वाचः स्वरूपमस्ति?, स्वातन्त्र्यशक्तिरेव हि परा, सैव क्रमं स्रष्टुमिच्छन्ती अपरा, सैव च क्रमरूपा सती परापरेति कथिता। तथा च तन्त्रालोके

'स्वातन्त्र्यशक्तिः क्रमसंसिसृक्षा
क्रमात्मता चेति विभोर्विभूतिः।
तदेव देवीत्रयमन्तरास्ता-
मनुत्तरं मे प्रथयत्स्वरूपम् ॥'

इत्यादिना। इत्येवमपरायाः वा परापरायाश्च स्वरूपस्य तादात्म्यात्, पराया अपि यदि तद्वदेव स्यात् परत्वं तद्विरुध्येत। परापरापराभेदयोर्भेदोपपत्त्या तत्राभेदस्वभावात् तत् परत्वं परास्वरूपे विरुध्येतेति, तथा परापरापरास्वरूपयोर्हि सकलमेव वेद्यराशिपतितं विरुध्येत परायामिति भावः। अत्र परायां तदभे-

दोपपादनादिति विरुद्धमेतत्, न च ब्राह्मणक्षत्रियवैश्यशूद्रादिभेदेन, न च देहभेदेन वा, न च सुरनरतिर्यगादीनां नानाशरीररचनया तत्परत्वं निष्कलत्वेन सकलत्वेन वा भवेत्?—इत्येवं वाक्कायमनसामेकीभावनया मम प्रसादं कुरु प्रसाददृष्टिं ददस्व किमिदं किमिदमित्यादिभावनया सर्वं विहाय एककोटिस्पर्शनात् परौन्मुख्यत्यागात्, प्रमेयपरिहारात् वा, प्रमातृतत्त्वाहंभावनया वा यत्किंचित् प्रमातृतत्त्वं तदेवोपपादयेति भावः । यच्च मम हृदि संशयः 'किमयम् किमयम् किमिदं किं वा इदम् किमन्यथा' इत्यादि भेददशापन्ने निर्णयं वद—एकमेव यत् प्रमातृतत्त्वं स्वप्रकाशं तदेव मे दर्शय, येन दर्पणप्रतिबिम्बितन्यायेन स्वात्मनि सर्वस्यास्यानतिरिक्तताप्रसङ्गात् अभेदोपपत्त्या अहमिति स्वरूपविश्रान्तेः सर्वमिदं मत्स्वरूपमिति निर्णयः स्यात् । प्रकर्षेणासादनं प्रसादः भेदापसरणेनाभेदोपपत्त्या स्वात्मैक्यताप्रतिपादनयुक्तिं विरचयेति तात्पर्यम् ॥ १–२–३–४–५–६ ॥

तदेवं स्वाभिन्नस्वसंविद्भैरवीरूपेणानुयुक्तस्य तत्त्वविषयागमस्य, निर्णायकपदस्थः स्वयं परमेश्वरः सिद्धान्तोपदेष्टा

## भैरव उवाच

इत्यादिना, तत्र भैरवशब्दार्थस्तदभिन्नस्वरूपत्वेन निर्दिष्टभैरवीशब्दे प्राङ्निर्वाहितः, अथ च भैर्भीमादिभिरवति इति भैरवः, अहमिति स्फुरणात् इदन्ताया विनाशात् आश्यानस्येव हिमघृतादेरिति भावः । उवाचेति स्वाभिन्नस्वरूपां संविच्छक्तिमभिमुखीकृत्य प्रतिश्रृणोति ।

साधु साधु त्वया पृष्टं तन्त्रसारमिदं प्रिये ॥७॥

गूहनीयतमं भद्रे तथापि कथयामि ते।
यत्किंचित्सकलं रूपं भैरवस्य प्रकीर्तितम् ॥ ८ ॥

तदसारतया देवि विज्ञेयमिन्द्रजालवत् ।
मायास्वप्नोपमं चैव गन्धर्वनगरभ्रमम् ॥ ९ ॥

ध्यानार्थं भ्रान्तबुद्धीनां क्रियाडम्बरवर्तिनाम् ।
केवलं वर्णितं पुंसां विकल्पनिहतात्मनाम्॥१०॥

तत्त्वतो न नवात्मासौ शब्दराशिर्न भैरवः ।
न चापि त्रिशिरा देवो न च शक्तित्रयात्मकः।११

नादबिन्दुमयो वापि न चन्द्रार्धनिरोधकः ।
न चक्रक्रमसंभिन्नो न च शक्तिस्वरूपकः॥१२॥

अप्रबुद्धमतीनां हि चैता बालविभीषिकाः ।
मातृमोदकवत्सर्वं प्रवृत्त्यर्थमुदाहृतम् ॥ १३ ॥

दिक्कालकलनातीता देशोद्देशाविशेषिणी ।
व्यपदेष्टुमशक्या सा न कथ्या परमार्थतः॥१४॥

अन्तःस्वानुभवानन्दा विकल्पोन्मुक्तगोचरा।
यावस्था भरिताकारा भैरवी भैरवात्मनः ॥१५॥

तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम् ।
एवंविधे परे तत्त्वे कः पूज्यः कश्च तृप्यति ॥१६॥

एवंविधा भैरवस्य यावस्था परिगीयते ।
सा परापररूपेण परा देवी प्रकीर्तिता ॥ १७ ॥

शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः ।
अतस्तद्धर्मधर्मित्वात्परा शक्तिः परात्मनः॥१८॥

न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते ।
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ॥१९॥

शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना ।
तदासौ शिवरूपी स्याच्छैवी मुखमिहोच्यते॥२०

यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवस्य च
॥ २१ ॥

हे देवि यत् त्वया पृष्टं तत् साधु साधु, परमेष्टत्वात् पुनरुक्त्या साधु साधु निर्देशः, यत् त्वया तन्त्राणां निश्चयानां सारं पृष्टं तत् त्वया गूहनीयं स्वात्मनि अभेदेन ध्यातव्यमिति भावः, न तु वाचा वैखर्यादिना, ततोऽपि अहमपि वदामि नान्यथा । यच्च भैरवस्य द्वैविध्येन सकलं निष्कलं च रूपं प्रसिद्धमेतत्सकलं जगद्रूपं नीलानीलघटादिनानावैचित्र्येण तत् सर्वं गन्धर्वनगरवदिन्द्रजालतुल्यमिति शेषः – भुक्त्वा पीत्वा सुखमहमस्वाप्समित्यत्र स्वप्नोपमदृष्टतुल्यं गन्धर्वनगरतुल्यं चेति –, तथा अप्रबुद्धमतीनां भ्रान्तमतीनां कर्मप्रधानफलाभिसन्धिवर्तिनां स्थूलध्यानयोगार्थम् ‘अहं विष्णुं यजामि, अहं गणपतिं यजामीति, स पुत्रं दास्यति

मह्यम्' इति विकल्पनिहतात्मनां पुंसां वर्णितम् । तत्त्वतो न नवात्मासौ – नवतत्त्वस्वरूपः, न वा वामादिनवशक्तिस्वरूपः, न चापि नरशक्तिशिवात्मा, न वा इच्छाज्ञानक्रियाशक्तित्रयात्मा च, न च शिवशक्तिस्वरूपः नादः शक्तिः बिन्दुश्च शिव इति शब्दप्रत्ययरूपं ज्ञानक्रियात्मकं वा, न च अमाख्यार्धचन्द्रनिरोधात्मकं च प्रणवस्य, न च षट्चक्रादिभेदगं, कुण्डलिन्यादिरूपेण वा – अकारादिक्षकारान्तवर्णचक्रग-अहमिति स्वरूपं, न वा कुण्डलिन्यादिशक्तिस्वरूपभाक् – परं तु मूढमतीनाम् एता बालविभीषिकाः अभिनिवेशादिप्रशमाय, बालो हि विभीषिकाभिर्लाल्यत एव स्वमात्रा, अथ चौषधादिभक्षणार्थं स्वमात्रा मोदकं वा शर्करां दास्यामीति लाल्यते । एवं सा परावस्था दिक्षु, कालेषु भूतादिषु, कलनातीता या आसीत् सास्ति, भविष्यति चेति दूरासन्नादिनानात्वेन अविशेषिणी, उपदेष्टुमशक्यापि तव उपदिशामीति शेषः । पूर्णाहन्ता स्वप्रकाशैकस्वरूपा निर्विकल्पपरमार्था च पूर्णस्वरूपस्य भैरवस्य या भरिताकारावस्था अहमिति विश्रान्तिमयी तदेव भैरवं वपुर्विज्ञेयमिति भावः । एवमस्मिन् भैरवे तत्त्वे कः पूज्यः को वा तृप्तः वा तृप्यति । एवमनेन रूपेण परावस्था भैरवस्य प्रकीर्तिता । यतश्चानयोः शक्तिशक्तिमतोरभेदस्तस्मात् इयं परा शक्तिरिति कथ्यते । अत्र च दृष्टान्तोऽपि – यथा वह्नेर्दाहिका शक्तिर्न भिन्ना तथेयं शक्तिरपि परा, इति एतन्मुखेन भैरवसांमुख्यं स्यादिति भावः । पुनरपि च दृष्टान्तोऽत्र – यथा हि वक्त्रेणैव अयमिति लभ्यते तथा शक्त्यैव शिवोऽयमिति व्यपदेशः । अपरोऽपि च दृष्टान्तः, – यथा दीपप्रकाशेन वा सूर्यालोकेन च दिग्विभागादि ज्ञायत एव, एवं शक्त्या शिवावभासनमिति सिद्धम् ॥ ७–२१ ॥

श्रीभैरवी उवाच

देवदेव त्रिशूलाङ्क कपालकृतभूषण ।
दिग्देशकालशून्या च व्यपदेशविवर्जिता ॥
या शक्तिर्भरिताकारा भैरवस्योपलभ्यते ।
कैरुपायैर्मुखं तस्याः परा देवी कथं भवेत् ॥
यथा सम्यगहं वेद्मि तथा ब्रूहि मम प्रभो ॥

इच्छाज्ञानक्रियात्मशक्तित्रय-भरितस्वरूपसत्तया उपलक्षित ?, विश्वस्य च संहारेण स्वात्मनि तत्स्थित्या अस्थिशेषतया विश्वस्य धारणं कपालपाणित्वं सिद्धमीश्वरस्य । दिक्षु दशसु, देशे, काले भूतादौ, शून्या तदविभागा परेति नाम्ना लक्ष्यते, तन्मुखं तद्दर्शनं च केनोपायेन भवेदिति शेषः । यथा चाहं त्वत्स्वरूपतया भवामि त्वदभेदोपपत्तेः, तथैव मे ब्रूहि – तत्रैव प्रवेशय इति भावः ॥

श्रीभैरव उवाच

ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत् ।
उत्पत्तिद्वितयस्थाने भरणाद्भरितास्थितिः ॥२४॥

ऊर्ध्वे द्वादशान्ते, प्राणः प्राणनरूपः जीवनाख्यः चित्तवृत्तिविशेषः संस्थाप्यः, अधश्च – हृदि हृदयस्थाने, जीवोऽपानः – जीव्यतेऽनेन इति जीवः भक्षणपानादेरधोमार्गप्रसरणात् जीव इति उच्यते तदुपाधिवान् अत एव जीव इति, विसर्गात्मा अन्तर्बहिर्भावकरणरूप आत्मा यस्य तेनापि परैव उच्चारमायाति अहमिति अन्तश्चक्रारूढा, एतयोर्द्वयोर्विभेदापत्त्या अहमिति प्रकाशनात् –

उत्पत्तौ द्वादशान्ते द्वितीये हृदि च धारणात् । तत्र स्थित्या भरितस्थितिः स्यादेव इति सर्वोपाधिविस्मरणात् अहमिति विमर्शवान् स्यात् इति संबन्धः । इति प्रथमा धारणा ॥ २४ ॥

अथ द्वितीयामाह

मरुतोऽन्तर्बहिर्वापि वियद्युग्मानुवर्तनात् ।
भैरवं भैरवस्येत्थं भैरवि व्यज्यते वपुः ॥ २५ ॥

प्राणापानरूपस्य मरुतोऽन्तर्बहिर्वियद्युग्मे द्वादशान्ते हृदये चानुवर्तनात् – अनुन्मेषनिमेषणात् । हे भैरवि ?, भैरवस्य परमात्मनः वपुः शरीरं स्वरूपं व्यज्यते प्रकाशत एव ॥ २५ ॥

तृतीयां धारणामाह

न व्रजेन्न विशेच्छक्तिर्मरुद्रूपा विकासते ।
निर्विकल्पतया मध्ये तया भैरवरूपधृत् ॥२६॥

हृदि यः प्राणः स तु न व्रजेत्, तत्स्थानात् नापि विशेत्, यत्रैवास्ति निर्विकल्परूपस्तत्रैवास्तु अस्पन्दात्मा । एवमेव द्वादशान्तेऽपि स्पन्दास्पन्दराहित्येन निर्विकल्पसमाधौ तन्मध्ये भैरवरूपाभिव्यक्तिः ॥ २६ ॥

चतुर्थीं धारणां निरूपयति

कुम्भिता रेचिता वापि पूरिता वा यदा भवेत् ।
तदन्ते शान्तनामासौ शक्त्या शान्तः प्रकाशते ॥ २७ ॥

---

२५ श्लो० उ० मू० युग्मानिवर्तनात्, भैरव्या भैरवस्य, इति च पाठः ।
२६ श्लो० उ० मू० विकासिते, भैरवरूपता, इति च पाठः ।

